पत्तिसामान्ये गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यादिरूपैः शब्दार्थज्ञानानां ये विकल्पा अभेदभ्रमाः, तद्युक्ता गवादिस्थूलसमापत्तिः विपरीततर्कयोगात्सवितर्कसंज्ञेत्यर्थः । अत एव तत्कालीनयोग एव सविकल्प इत्यप्युच्यते । विकल्पसंकल्पसंकीर्णत्वात् । एतद्विकल्पशून्य एव च निर्विकल्पकयोग इति । एतेन यदाधुनिका आहुः—यत्किंचिद्धर्मपुरस्कारेणैव प्रवर्तमानो योगः सविकल्पकः, निर्धर्मकश्च निर्विकल्पक इति—तदप्रामाणिकत्वादुपेक्षणीयम् । अत्र च शब्दाद्यभेदविकल्प आरोपसामान्योपलक्षकम् । एवमुत्तरसूत्रेऽपि ॥ ४२ ॥

## नागोजीभट्टवृत्तिः ।

तत्र स्थूलसमापत्तेः सवितर्कनिर्वितर्काख्यौ विशेषावाह—**तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः** । सूक्ष्मविषयायास्तृतीयसूत्रे वक्ष्यमाणतयाऽत्र सूत्रे स्थूलविषयाग्रहणम् । तत्र गौरितिशब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागरूपा ये शब्दार्थज्ञानविकल्पा अभेदभ्रमास्तद्युक्ता गवादिस्थूलसमापत्तिर्विपरीततर्कणयोगात्सवितर्कसंज्ञेत्यर्थः । अतएव स योगः सविकल्प इत्युच्यते । लोकेऽपीदृशं ज्ञानं सविकल्पकमुच्यते । एतद्विकल्पशून्यश्च निर्विकल्पकयोग इति । वस्तुत उदात्तत्वादिधर्मैः शब्दस्य जडत्वमूर्तत्वादिभिरर्थस्य प्रकाशमूर्तिविरहादिभिर्ज्ञानस्य परस्परस्माद्भेद एव । शब्दाद्यभेदविकल्प आरोपसामान्योपलक्षकः ॥ ४२ ॥

## मणिप्रभा ।

सेयं संप्रज्ञाताख्या समापत्तिः पुनरवान्तरभेदाच्चतुर्धा भवति । सवितर्का निर्वितर्का सविचारा निर्विचारा चेति । तत्र सवितर्कायाः स्वरूपमाह—तत्रेति ।

तत्र तासु समापत्तिषु मध्ये सवितर्का समापत्तिरेषा ज्ञेया । तथा हि गौरित्युक्ते शब्दार्थज्ञानानि त्रीण्यभिन्नानि भासन्ते । तत्र गौरिति शब्द इत्येको विकल्पः, अयं हि गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविषयकः । तथा गौरित्यर्थ इत्येको विकल्पः, तत्र गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविषयकः । एवं गौरिति ज्ञानमित्येको विकल्पः, अयं तु गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदगोचरः । त एते विकल्पाः, असदभेदगोचरत्वात् । एवं घटः पट इत्यादयो विकल्पा ज्ञेयाः । तत्र शब्दज्ञानाभ्यामभेदेन विकल्पिते स्थूले गवाद्यर्थे समाहितचित्तस्य योगिनः समाधिजन्यसाक्षात्कारो यथा कल्पितार्थमेव गृह्णाति तथा सा समाधिप्रज्ञा शब्दार्थज्ञानानां विकल्पैः संकीर्णा तैस्तुल्या भवति विकल्पत्वाविशेषात् सा सङ्कीर्णा सवितर्का समापत्तिरित्यर्थः ॥ ४२ ॥

## चन्द्रिका ।

शब्दार्थेति । शब्दः, अर्थो जात्यादिः, ज्ञानं बुद्धिवृत्तिः, विकल्पः एते यस्यां भासन्ते सा सवितर्का ॥ ४२ ॥

## योगसुधाकरः ।

इत्थं सामान्यतः संप्रज्ञातसमापत्तिमुक्त्वा अधुना वितर्कविचाररूपग्राह्यसमापत्तेः सवितर्कनिर्वितर्कसविचारनिर्विचारभेदेन चातुर्विध्यमाह त्रिभिः ।

गौरिति शब्दः गौरित्यर्थः गौरिति ज्ञानम्, तेषां परस्परतादात्म्यगोचरा ये विकल्पास्तैः संकीर्णा तत्तुल्या सवितर्का समापत्तिः, तस्या विकल्पत्वाविशेषादित्यर्थः ॥ ४२ ॥

## भोजवृत्तिः ।

उक्तलक्षणविपरीतां निर्वितर्कामाह—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥**

शब्दार्थस्मृतिप्रविलये सति प्रत्युदितस्पष्टग्राह्याकारप्रतिभासितया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः ॥ ४३ ॥

## भावागणेशवृत्तिः ।

स्मृतीति । पूर्वसूत्रे यो विकल्प उक्तस्तत्र शब्दसङ्केतस्मृतिरेव बीजम् । श्रवणमनननिदिध्यासनैर्हि

समापत्तिर्जायते । तत्र श्रवणं संकेतस्मरणकार्यम् । सङ्केतश्च शब्दार्थयोर्विकाल्पताभेदमात्र इत्यतः सङ्केतस्मृतिजन्ये शाब्दबोधेऽपि तयोरभेद उपनीतत्वाद्भासते । ततश्च श्रवणकार्ये मनने निदिध्यासने प्राथमिकसाक्षात्कारे च भासते, उपनयसाम्यात् । यदा तु ध्येयाविशवशात्तस्या विकल्परूपायाः सङ्केतस्मृतेः परिशुद्धिरपगमो भवति समापत्तिश्च स्वरूपशून्येव जायमाना भवति, तदा शब्दज्ञानयोरस्फुरणेनाभेदारोपासम्भवात् अर्थमात्रनिर्भासा ध्येयार्थमात्रावगाहिनी विकल्पशून्या स्थूलसमापत्तिर्निर्वितर्कसंज्ञेत्यर्थः । इयं समापत्तिः परं प्रत्यक्षमुच्यते अविद्यालेशेनाप्यसंपर्कात् । पूर्वसूत्रोक्ता च समापत्तिरपरं प्रत्यक्षमविद्यालेशत्वादिति ॥ ४३ ॥

## नागोजीभट्टवृत्तिः ।

स्थूलसमापत्तेर्द्वितीयं भेदमाह—स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का । पूर्वसूत्रोक्तविकल्पे संकेतग्राह्यशक्तिस्मृतिरेव बीजम् । श्रवणमनननिदिध्यासनैर्हि समापत्तिर्जायते । तत्र श्रवणं शक्तिस्मृतिकार्यं शक्तिश्च शब्दार्थयोर्वृत्त्येश्वरकल्पिताभेदकल्पिताभेदाध्यवसायरूपसंकेतग्राह्योऽभेद एवेति तज्जन्ये शाब्दबोधेऽपि तयोरभेद उपनीतत्वाद्भासते । ततः श्रवणकार्ये मनने निदिध्यासनरूपे प्रथमसाक्षात्कारे च भासते, उपनयसाम्यात् । यदा ध्येयाविशवशाच्छक्तिस्मृतेः परिशुद्धिरपगमो भवति तज्जन्यश्रुतानुमितसाक्षात्काराणामपि विकल्परूपाणां परिशुद्धिरपगमः तदा समापत्तिः स्वरूपशून्येव भवति, शब्दज्ञानास्फुरणेनाभेदारोपासंभवात् । तदा स्वरूपमात्रनिर्भासाऽविकाल्पितरूपा परिच्छिन्ना ध्येयार्थमात्रावगाहिनी स्थूलसमापत्तिर्निर्वितर्कसंज्ञेत्यर्थः । इयं समापत्तिः परं प्रत्यक्षमुच्यते, अविद्यालेशेनाप्यसंपर्कात् । पूर्वा चापरं प्रत्यक्षमविद्यालेशसत्त्वात् । स चार्थः क इत्यत्रोक्तं भाष्ये-महत्त्वसमानाधिकरणैकत्वविषयैकबुद्धिविषयोऽणुप्रचयविशेषरूपावयवी घटादिरूपः । अणुशब्देन तन्मात्राणि परमाणवश्च तत्र च रूपरसादिपरमाणूनां नैरन्तर्येण संकलिततयावस्थानम् । स च तेभ्यो नात्यन्तभिन्नः गवाश्ववद्धर्मधर्मिभावानुपपत्तेः, नात्यन्तमभिन्नः धर्मिवदेव तदनुपपत्तेः, तस्मात्ततो भिन्नोऽभिन्नश्च । स च तदनुभवतद्व्यवहाराभ्यां विप्रतिपन्नं प्रत्यनुमेयः । कारणाभेदादेव तदाकारः धर्मान्तरस्य कपालादेरुदये च तिरोभवन्नष्ट इति व्यवह्रियमाणः अणुसाध्यक्रियाभिन्नतदसाध्यमधूदकादिसाधारणलक्षणाक्रियावान् स्पर्शवान् महत्त्ववान् एकत्ववान् किञ्चिदपेक्षयाणुत्वांश्चेति ॥ ४३ ॥

## मणिप्रभा ।

निर्वितर्कामाह—स्मृतीति ।

गवादिशब्दानां शक्तिरूपः सङ्केतो विकल्पितार्थेष्वेव लोके गृह्यते तस्य स्मृत्या शाब्दज्ञानं परार्थानुमितिश्च विकल्प एव जायते । तथा च श्रुते वाऽनुमिते वाऽर्थे श्रुत्यनुमितिरूपविकल्पमूला समापत्तिः सवितर्का भवति स्मृतिपरिशुद्धौ सत्याम् अर्थमात्रतात्पर्यवता चित्तेनार्थमात्राध्यासात्सङ्केतस्मृतेस्त्यागे सति तत्कार्यस्य विकल्पस्य त्यागात्समाधिप्रज्ञा स्वीयं ग्राहकत्वं प्रज्ञारूपं यत्तेन शून्येव भूत्वाऽर्थमात्रनिर्भासादविकाल्पितार्थरूपं यद्ग्राह्यं तत्स्वरूपेणैव निर्भास्यमाना निर्वितर्का समापत्तिरित्यर्थः । तत्र सवितर्कसाक्षात्कारो यस्तदपरं प्रत्यक्षं विकल्पत्वात् । निर्वितर्कप्रत्यक्षं तु परं सत्यार्थविषयत्वात् । स च सत्यार्थो गोघटादिरवयवी ज्ञेयः । अत्र परमाणुपुञ्जातिरिक्तोऽवयवी नास्तीति बौद्धमतमाशङ्क्य महानेको घट इत्यबाधितानुभवादस्ति, स चास्माकं मते भूतसूक्ष्मरूपाणां परमाणूनां परिणामः । तस्य च स्वोपादानेन भेदाभेदात्मकं तादात्म्यमिति भाष्ये साधितम् ॥ ४३ ॥

## चन्द्रिका ।

स्मृतीति । शब्दार्थस्मृतिप्रविलये स्पष्टग्राह्याकारप्रतिभासतया स्वरूपशून्या इव निर्वितर्का समापत्तिः ॥ ४३ ॥

## योगसुधाकरः ।

स्मृतीति । शब्दज्ञानाभ्यां विकल्पिते पदार्थे शब्दसंकेतो गृह्यते, तस्य स्मृत्या शाब्दबोधो विकल्प

एव जायते । अतः संकेतस्मृतेः परिशुद्धौ प्रलये सति तत्कार्यस्य विकल्पस्य प्रलयात्समाधिभावना स्वीयभावनात्वशून्येव भूत्वा अविकल्पितार्थमात्रेणैव निर्भास्यमाना निर्वितर्का समापत्तिरित्यर्थः ॥ ४३ ॥

## भोजवृत्तिः ।

भेदान्तरं प्रतिपादयितुमाह —

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

एतयैव सवितर्कया निर्वितर्कया च समापत्त्या सविचारा निर्विचारा च व्याख्याता । कीदृशी ? सूक्ष्मविषया सूक्ष्मस्तन्मात्रेन्द्रियादिर्विषयो यस्याः सा तथोक्ता । एतेन पूर्वस्याः स्थूलविषयत्वं प्रतिपादितं भवति । सा हि (१)महाभूतेन्द्रियालम्बना । शब्दार्थविषयत्वेन शब्दार्थविकल्पसहितत्वेन देशकालधर्मावच्छिन्नः सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा सविचारा । देशकालधर्मादिरहितो धर्मिमात्रतया सूक्ष्मोऽर्थस्तन्मात्रेन्द्रियरूपः प्रतिभाति यस्यां सा निर्विचारा ॥ ४४ ॥

## भावागणेशवृत्तिः ।

स्थूलविषये समापत्तिद्वैविध्यं प्रदर्श्य सूक्ष्मेऽपि विषये तस्य द्वैविध्यमतिदिशति—**एतयैवेति** ।

एतयैव सवितर्कनिर्वितर्करूपया स्थूलविषयकसमापत्त्या सूक्ष्मविषयापि सविचारनिर्विचाररूपा समापत्तिद्वयी व्याख्याता । अन्योपरागानुपरागसाम्येनेत्यर्थः । अत्र हि विकल्पतच्छून्यत्वयोर्नातिदेशः । स्थूलविषयिण्यां निर्वितर्काख्यपूर्वभूमिकायां त्यक्तस्य यथोक्तविकल्पस्य सूक्ष्मविषयिण्यामुत्तरभूमिकायामसंभवादिति । तत्र स्थूलरूपं तत्कार्यं तदुपरागेण सूक्ष्मे समापत्तिः सविचारा कार्यकारणविचारघटितत्वात् । तदुत्तरोत्पद्यमाना च केवलसूक्ष्मविषयिणी निर्विचारेति विभागः ॥ ४४ ॥

## नागोजीभट्टवृत्तिः ।

उक्तं द्वैविध्यं सूक्ष्मविषयसमापत्तावतिदिशति—**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता** । एतयैव सवितर्कनिर्वितर्करूपया स्थूलविषयसमापत्त्या सूक्ष्मविषयापि सविचारनिर्विचाररूपा समापत्तिद्वयी व्याख्याता । अन्योपरागानुपरागसाम्येनेत्यर्थः । अत्र विकल्पतच्छून्यत्वयोर्नातिदेशः स्थूलविषयायां निर्वितर्काख्यपूर्वभूमिकायां त्यक्तस्य विकल्पस्य सूक्ष्मविषयोत्तरभूमिकायामसंभवादिति । तदुक्तं भाष्ये 'एवमुभयोरेतयोर्नि(२)र्वितर्कया विकल्पहानिर्व्याख्याता' इति । तत्र स्थूलरूपं यत्कार्यं तदुपरागेण सूक्ष्मे समापत्तिः सविचारा, कार्यकारणविचारघटितत्वात् । तस्यां हि स्थूलकार्यघटादिवैशिष्ट्यं तत्र चाणूनामुपर्यधोदेशावच्छिन्नत्वम् । पार्थिवपरमाणौ गन्धतन्मात्रप्रधानपञ्चतन्मात्रानुगमः । आप्ये गन्धतन्मात्रभिन्नरसतन्मात्रप्रधानचतुरनुगमः । तैजसे तद्द्वयरहितरूपतन्मात्रप्रधानत्र्यनुगमः । वायवीये स्पर्शशब्दतन्मात्रानुगमः । नाभसे शब्दतन्मात्रानुगमस्तद्विशिष्टा बुद्धिरुपजायते । एवं च तत्तत्परमाणुस्तत्तन्मात्रप्रचयात्मा तन्मात्रमपि गन्धाद्यणुप्रचयात्मकमिति बोध्यम् । तदुत्तरोत्पद्यमाना च केवलसूक्ष्मविषया निर्विचारेति विभागः । यद्यपि तन्मात्रादिसूक्ष्ममपि सर्वधर्मात्मकं तद्वच्च, तथापि साक्षात्काराभ्यासेनातीतानागतवर्तमानसकलतद्धर्मापगम इति दिक् ॥ ४४ ॥

## मणिप्रभा ।

एतयैवेति । स्थूलपरिणामघटादिषु उपादानत्वेनानुगता ये परमाणवः पञ्चतन्मात्राणां विकारा भूतरूपेण संस्थिताः सूक्ष्मास्तेषु विषयेषु स्वीयकार्यकारणदेशकालनानाविशेषणविशिष्टेषु स्ववाचकशब्दज्ञानाभ्यामभेदेन विकल्पितेषु या समापत्तिः सा सविचारेत्युच्यते । तेष्वेव सर्वविशेषणशून्यस्वर्थमात्रेषु परमाणुषु या समापत्तिः सा निर्विचारा । सा खलु सत्यार्थमात्रस्वरूपा समाधिप्रज्ञा स्वरूपशून्येव निर्भासते । तया च स्थूलगोचरया सवितर्कया निर्वितर्कया च व्याख्यातया सूक्ष्मविषया सविचारा निर्विचारा च व्याख्याता भवतीत्यर्थः ॥ ४४ ॥

---

(१) महाभूतालम्बनेति पाठान्तरम् । (२) 'एतयैव' इति पाठान्तरम् ।

### चन्द्रिका ।

**एतयैवेति** । एतयैव सवितर्कया निर्वितर्कया सविचारा निर्विचारा च व्याख्याता । सूक्ष्मस्तन्मात्रेन्द्रियादिर्विषयो यस्याः सा । पूर्वा स्थूलविषया ॥ ४४ ॥

### योगसुधाकरः ।

उक्तन्यायमन्यत्रातिदिशति—**एतयैवेति** । एतयैव विकल्पितस्थूलाकारया सवितर्कया अविकल्पित स्थूलाकारया निर्वितर्कया च सूक्ष्मविषया स्वशब्दज्ञानाभ्याममभेदेन विकल्पितसूक्ष्मतन्मात्रेन्द्रियगोचरा सविचारा अविकल्पितसूक्ष्मतन्मात्रेन्द्रियगोचरा निर्विचारा च व्याख्याता भवतीत्यर्थः ॥ ४४ ॥

### भोजवृत्तिः ।

अस्या एव सूक्ष्मविषयायाः किंपर्यन्तः सूक्ष्मविषय इत्याह—

## सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

सविचारनिर्विचारयोः समापत्त्योर्यत्सूक्ष्मविषयत्वमुक्तं तदलिङ्गपर्यवसानं—न क्वचिल्लीयते न वा किंचिल्लिङ्गति गमयतीत्यलिङ्गं प्रधानं—तत्पर्यन्तं सूक्ष्मविषयत्वम् । तथा हि—गुणानां परिणामे चत्वारि पर्वाणि विशिष्टलिङ्गमविशिष्टलिङ्गं लिङ्गमात्रमलिङ्गं चेति । विशिष्टलिङ्गं भूतेन्द्रियाणि(१) अविशिष्टलिङ्गं तन्मात्रेन्द्रियाणि, लिङ्गमात्रं बुद्धिः, अलिङ्गं प्रधानमिति । नातः परं सूक्ष्ममस्तीत्युक्तं भवति ॥४५॥

### भावागणेशवृत्तिः ।

ननु सूक्ष्मो विषयः कियत्पर्यन्त इत्यपेक्षायामाह—**सूक्ष्मेति** ।

सूक्ष्मश्चासौ विषयश्चेति सूक्ष्मविषयः । अलिङ्गाख्यप्रकृतिपर्यन्तम् । न तु पुरुषः सूक्ष्म इत्यर्थः । अतोऽत्र सूक्ष्मत्वं तत्त्वान्तरप्रकृतित्वम् । न च जलादिचतुष्टयेऽतिव्याप्तिः, भूतानामुत्तरोत्तरभूतेष्वाधारकारणमात्रत्वात्, तन्मात्राणामेव भूतोपादानत्वात्, अन्यथाष्टप्रकृतिसिद्धान्तविरोध दिति ॥ ४५ ॥

### नागोजीभट्टवृत्तिः ।

सूक्ष्मो विषयः कियत्पर्यन्त इत्याकाङ्क्षायामाह—**सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्** । न क्वापि गच्छतीत्यलिङ्गं प्रधानं तत्पर्यन्तं सूक्ष्मो विषय इत्यर्थः । तत्त्वान्तरप्रकृतित्वमत्र सूक्ष्मत्वं विवक्षितमित्यर्थः । न च जलादिभूतचतुष्टयेऽतिव्याप्तिः, भूतानामुत्तरोत्तरभूतेषु आधारकारणमात्रत्वात्तन्मात्राणामेव भूतोपादानत्वात्, अन्यथाष्टप्रकृतित्वसिद्धान्तविरोधः स्यात् । पुरुषस्तु न परिणामिकारणं किन्त्वधिष्ठानकारणं तेषां संसर्गे निमित्तकारणं चेति न तस्येदृशसौक्ष्म्यमिति भावः ॥ ४५ ॥

### मणिप्रभा ।

ननु किमस्याः ग्राह्यसमापत्तेः परमाणुष्वेवावसानं, नेत्याह—**सूक्ष्मेति** ।

अस्याः समापत्तेः सूक्ष्मविषयत्वमलिङ्गे प्रधाने पर्यवस्यति । तथा हि—पार्थिवः परमाणुर्गन्धतन्मात्रादितरतन्मात्राङ्गकाज्जायते । आप्यस्तु गन्धतन्मात्रवर्जितादसतन्मात्रादितरतन्मात्राङ्गकाद् । तैजसस्तु गन्धरसद्वयवर्जितादूपतन्मात्रादितरद्वयाङ्गकाद् । वायव्यस्तु पूर्वहीनात्स्पर्शतन्मात्राच्छब्दतन्मात्राङ्गकात् । नाभसः परमाणुस्त्वेकस्मादेव शब्दतन्मात्राज्जायत इति प्रक्रिया । अतो विकारेभ्यः परमाणुभ्य उपादानानि पञ्च तन्मात्राणि सूक्ष्माणि, तेभ्योऽप्यहङ्कारः सूक्ष्मः, तस्मादपि महान्महतोऽपि प्रधानं, तद्धि लयं न गच्छतीत्यलिङ्गमुच्यते । ततः परं सूक्ष्ममुपादानं नास्ति पुरुषस्य सत्त्वेऽप्यनुपादानत्वाद् । पुरुषो हि भोगापवर्गार्थी सन् पुरुषार्थनिमित्तके सर्गे निमित्तमात्रं भवति । तस्मात्सूक्ष्मग्राह्यसमापत्तिः प्रधानपर्यन्तेति सिद्धम् ॥ ४५ ॥

### चन्द्रिका ।

**सूक्ष्मेति** । सविचारनिर्विचारयोः समापत्त्योर्यत्सूक्ष्मविषयत्वं तदलिङ्गपर्यवसानं न क्वचिल्लीयते न वा किंचिल्लिङ्गति गमयतीत्यलिङ्गं प्रधानं तत्पर्यन्तं सूक्ष्मविषयत्वम् ॥ ४५ ॥

---

(१) भूतानीति पाठान्तरम् ।

योगसुधाकरः।

किं निर्विचारसमापत्तेस्तन्मात्रेष्वेवावसानम् ! नेत्याह —सूक्ष्मेति ।

अस्याः समापत्तेः सूक्ष्मविषयत्वमलिङ्गे प्रधाने पर्यवस्यति । तथा हि-तन्मात्रेभ्योऽहंकारः सूक्ष्मः, तस्मादपि महान् ततोऽपि प्रधानम् । तद्धि न लीयत इत्यालिङ्गमुच्यते । ततः परं न सूक्ष्मा प्रकृतिः समस्ति । पुरुषस्तु न प्रकृतिः सर्गे निमित्तमात्रमिति ध्येयम् ॥ ४५ ॥

भोजवृत्तिः।

एतासां समापत्तीनां प्रकृते प्रयोजनमाह—

**ता एव सबीजः समाधिः ॥ ४६ ॥**

ता एवोक्तलक्षणाः समापत्तयः, सह बीजेनाऽऽलम्बनेन वर्तते इति सबीजः संप्रज्ञातः समाधिरित्युच्यते, सर्वासां सालम्बनत्वात् ॥ ४६ ॥

भावागणेशवृत्तिः।

वितर्कविचारे सूत्रेण पूर्वं संप्रज्ञातस्यावान्तरविभाग एव कृतः, नतु संप्रज्ञातसामान्यं लक्षितमतो यथोक्तसमापत्त्याख्यकार्यमुखेन सबीजपरिभाषापूर्वकं संप्रज्ञातसामान्यलक्षणमाह—**ता एवेति** ।

ता एव ग्रहीतृग्रहणग्राह्येषु समापत्तय एव सबीजः समाधिः सम्प्रज्ञातयोग इत्यर्थः । समापत्तिरूपसाक्षात्कारहेतुत्वात् योगस्य समापत्तित्वं कार्यकारणाभेदेनोक्तम् । आनन्दस्य बुद्धिधर्मत्वेनानन्दसमापत्तेर्ग्रहणसमापत्तावेव प्रवेशः । समापत्तीनां दुःखनिवृत्तिबीजसंस्कारहेतुत्वात् तद्धेतोर्वृत्तिनिरोधरूपस्य योगस्यापि सबीजत्वम् । समाधिशब्दश्चाङ्गाङ्गिनोरभेदेन योगे प्रयुक्तः ॥ ४६ ॥

नागोजीभट्टवृत्तिः।

इदानीं यथोक्तसमापत्त्याख्यकार्यमुखेन सबीजपरिभाषापूर्वकं सम्प्रज्ञातसामान्यलक्षणमाह— **ता एव सबीजः समाधिः** । ता एव ग्राह्यग्रहणग्रहीतृषु समापत्तय एव सबीजः समाधिः सम्प्रज्ञातयोग इत्यर्थः । समापत्तिरूपसाक्षात्कारहेतुत्वात् योगस्य समापत्तित्वं कार्यकारणाभेदात् । आनन्दस्य बुद्धिधर्मत्वेनानन्दसमापत्तेर्ग्रहणसमापत्तावेव प्रवेशः, समापत्तीनां दुःखनिवृत्तिबीजसंस्कारहेतुत्वात् तद्धेतोः वृत्तिनिरोधरूपस्य योगस्यापि सबीजत्वम् । समाधिशब्दश्चाङ्गाङ्गिनोरभेदेन योगे प्रयुक्त इति दिक् ॥४६॥

मणिप्रभा।

एवं स्थूले सूक्ष्मे च ग्राह्ये चतस्रः समापत्तय उक्ताः, संप्रति तासां संप्रज्ञातत्वमुपसंहरति—**ता एवेति** ।

ग्रहणग्रहीत्रोरपि सविकल्पत्वनिर्विकल्पत्वभेदेन सानन्दा आनन्दमात्रा सास्मिता अस्मिता चेति चतस्रः समापत्तयो भवन्ति उक्तन्यायसाम्यात् । एवमष्टसमापत्तयो यास्ता एव सबीजः समाधिः संप्रज्ञातः । विवेकख्यात्यभावेन बन्धबीजसत्त्वात् सबीजत्वं द्रष्टव्यम् ॥ ४६ ॥

चन्द्रिका।

**एतयैवेति** । ता एवोक्तलक्षणाः समापत्तयः सह बीजेनावलम्बनेन वर्त्तन्त इति सबीजः सम्प्रज्ञातसमाधिरुच्यते इत्यर्थः, सर्वासां सालम्बनत्वात् ॥ ४६ ॥

योगसुधाकरः।

संप्रज्ञातसमापत्तीरुपसंहरति—**ता एवेति** ।

ता एव पूर्वोक्ता एव विवेकख्यात्यभावेन बन्धबीजसत्त्वात्सबीजः समाधिरित्यर्थः ॥ ४६ ॥

भोजवृत्तिः।

अथेतरासां समापत्तीनां निर्विचारफलत्वान्निर्विचारायाः फलमाह—

**निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥**

निर्विचारत्वं व्याख्यातम् । वैशारद्यं नैर्मल्यम् । सवितर्का स्थूलविषयामपेक्ष्य निर्वितर्कायाः प्राधान्यम् । ततोऽपि सूक्ष्मविषयायाः सविचारायाः; ततोऽपि निर्विकल्परूपाया निर्विचारायाः, तस्यास्तु

निर्विचारायाः प्रकृष्टाभ्यासवशाद्वैशारद्ये नैर्मल्ये सत्यध्यात्मप्रसादः समुपजायते । चित्तं क्लेशवासनारहितं (१)स्थिरप्रवाहयोग्यं भवति । एतदेव चित्तस्य वैशारद्यं यत्स्थितौ दार्ढ्यम् ॥ ४७ ॥

### भावागणेशवृत्तिः ।

उक्तासु समापत्तिषु निर्विचारकाष्ठायाः कश्चनोत्कर्षमाह—**निर्विचारेति** ।

ध्येयगताशेषविशेषप्रतिबिम्बोद्ग्राहिणी निश्चलैकाग्रता चित्तस्य वैशारद्यम् । निर्विचारसमापत्तेरेव वैशारद्ये सति अध्यात्मप्रसादो भवति । आत्मनि बुद्धौ वर्तते इत्यध्यात्मम् । तादृशप्रसादो नैर्मल्यं भवति । येन प्रसादेन पुरुषादिसाक्षात्कारस्तद्योगं विनापि भवतीत्यर्थः ॥ ४७ ॥

### नागोजीभट्टवृत्तिः ।

उक्तासु समापत्तिषु इतरासां निर्विचारफलकत्वान्निर्विचारायाः फलमाह—**निर्विचारवैशारद्येऽध्यात्मप्रसादः** । ध्येयगताशेषविशेषग्राहिणी निश्चलैकाग्रता चित्तस्य वैशारद्यम् । निर्विचारसमापत्त्या एव एव वैशारद्ये सति अध्यात्ममात्मनि बुद्धौ प्रसादो भवति येन पुरुषादिसाक्षात्कारस्तद्योगं विनापि भवतीत्यर्थः ॥ ४७ ॥

### मणिप्रभा ।

तत्र निर्विचारसमापत्तेः फलतोऽतिशयमाह—**निर्विचारेति** ।

रजस्तमोमलापेतस्य बुद्धिसत्त्वस्य स्वच्छस्थितिरूपवृत्तिप्रवाहः प्रधानान्तसूक्ष्मग्राह्यगोचरः यः सोऽयं निर्विचारसमाधेर्वैशारद्यं तस्मिन्सत्यक्रमेण परमाण्वादिप्रधानान्ततत्त्वसमूहालम्बनः स्वात्मनिष्ठोऽध्यात्मप्रसादो भवतीत्यर्थः ॥ ४७ ॥

### चन्द्रिका ।

**निर्विचारेति** । निर्विचारायाः प्रकृष्टाभ्यासवशाद्वैशारद्ये नैर्मल्ये सति अध्यात्मप्रसादः समुपजायते, चित्तस्यैतदेव वैशारद्यम् । किं ? यत् स्थितौ दार्ढ्यम् ॥ ४७ ॥

### योगसुधाकरः ।

इत्थं संप्रज्ञातमुपसंहृत्यासंप्रज्ञातमुपायप्रत्ययमुपसंहर्तुं तस्य पूर्वरङ्गं निर्विचारातिशयमाह—**निर्विचारेति** ।

निर्विचारस्य प्रधानपर्यन्तसूक्ष्मगोचरस्य यद्वैशारद्यमभ्यासपाटवेन तस्य प्रधानान्त्यग्भावाच्चितिशक्तेरुद्वोधः, तस्मिन् सत्यध्यात्मनश्चितिशक्तेः प्रसादः ख्यातिर्जायते ॥ ४७ ॥

### भोजवृत्तिः ।

तस्मिन्सति किं भवतीत्याह—

## ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥

ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेणाऽऽच्छाद्यते सा ऋतंभरा प्रज्ञा तास्मिन्सति भवतीत्यर्थः । तस्माच्च प्रज्ञालोकात्सर्वं यथावत्पश्यन्योगी प्रकृष्टं योगं प्राप्नोति ॥ ४८ ॥

### भावागणेशवृत्तिः ।

पूर्वोक्ते सबीजयोगे जायमानायाः समापत्त्याख्यप्रज्ञाया अन्वर्थां तान्त्रिकीं संज्ञामाह—**ऋतम्भरेति** ।

तत्र सबीजयोगे जायमाना प्रज्ञा समापत्त्याख्या ऋतम्भरसंज्ञा भवति । ऋतस्य सत्यस्यैव भरणात् विषयत्वेन धारणादित्यर्थः । सवितर्कप्रज्ञायाश्च विकल्पसत्त्वेऽपि ऋतम्भरजातीयत्वेन संग्रहः । अथवा ततः किं तत्राह—ऋतम्भरा तत्र प्रज्ञा । तत्र ध्यात्मप्रसादे जायमाना आत्मसाक्षात्काररूपा प्रज्ञा ऋतम्भरेत्यर्थः ॥ ४८ ॥

### नागोजीभट्टवृत्तिः ।

तदेवाह—**ऋतम्भरा तत्र प्रज्ञा** । ऋतं सत्यं कूटस्थनित्यं पुरुषं बिभर्ति तादृशी तत्संज्ञा प्रज्ञा

(१) स्थितिप्रवाहेति पाठान्तरम् ।

साक्षात्कारस्तत्र प्रसादे सति भवतीत्यर्थः । तदुक्तम्—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥ इति ।

पूर्वार्धेन श्रवणमनननिदिध्यासनान्युक्तानि ॥ ४८ ॥

## मणिप्रभा ।

अस्य प्रसादस्य योगिसंमतां संज्ञामाह—ऋतम्भरेति ।

तत्र वैशारद्ये सति या प्रज्ञा निर्विचारा समाधिजन्या तस्या ऋतम्भरेति संज्ञा भवति । ऋतमविकल्पितं सत्यं बिभर्तीति व्युत्पत्तेरित्यर्थः ॥ ४८ ॥

## चन्द्रिका ।

ऋतम्भरेति । ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेणाच्छाद्यते सा ऋतम्भरा तस्मिन् सति भवति, तस्माच्च प्रज्ञालोकात् सर्वं यथावत्पश्यन् योगी प्रकृष्टं योगं प्राप्नोति ॥ ४८ ॥

## योगसुधाकरः ।

ततः किम्—ऋतम्भरेति । तत्र पुरुषख्यातौ सत्याम् ऋतं सत्यमात्मानं बिभर्ति प्रकाशयतीति ऋतम्भरा प्रज्ञा धर्ममेघः समाधिर्जायत इत्यर्थः ॥ ४८ ॥

## भोजवृत्तिः ।

अस्याः प्रज्ञान्तराद्वैलक्षण्यमाह

### श्रुतानुमानप्रज्ञाभ्यां सामान्यविषया विशेषार्थत्वात् ॥ ४९ ॥

श्रुतमागमज्ञानम्, अनुमानमुक्तलक्षणम्, ताभ्यां जायते प्रज्ञा सा सामान्यविषया। न हि शब्दालिङ्गयोरिन्द्रियवद्विशेषप्रतिपत्तौ सामर्थ्यम् । इयं पुनर्निर्विचारवैशारद्यसमुद्भवा प्रज्ञा ताभ्यां विलक्षणा विशेषविषयत्वात् । अस्यां हि प्रज्ञायां सूक्ष्मव्यवहितविप्रकृष्टानामपि विशेषः स्फुटेनैव रूपेण भासते । अतस्तस्यामेव योगिना परः प्रयत्नः कर्तव्य इत्युपदिष्टं भवति ॥ ४९ ॥

## भावागणेशवृत्तिः ।

ननु आगमानुमानाभ्यामेव प्रमाणाभ्यामर्थतत्त्वं गृह्यतामलम् तदुत्तरं योगेनेत्याशङ्कायामाह—श्रुतेति ।

सा तु योगसामान्यजा प्रज्ञा श्रवणमननाभ्यामतिरिक्तविषया विशेषार्थत्वात् । विशेषविषयत्वादित्यर्थः । शब्दानुमाने हि सामान्यमात्रविषयके भवतः सामान्यपुरस्कारेणैव सङ्केतग्रहात्, व्याप्तिग्रहाच्च । न तु सङ्केतग्राह्यानवच्छेदकविशेषग्राहके । योगजप्रज्ञा तु तद्ग्राहिकेति । अतोऽनधिगताधिगन्तृत्वाद्योगजप्रज्ञायाः प्रामाण्यम् । ननु पुरुषे विशेषाभावात्तत्प्रज्ञा किंविशेषग्रहणेन सफला स्यादिति चेन्न । अन्ततः स्वस्वोपाधिप्रतिबिम्बानामेवातीतानागतवर्तमानानां भोगरूपाणां मुक्तामुक्तसकलपुरुषेष्वन्योन्यं विशेषत्वादिति ॥ ४९ ॥

## नागोजीभट्टवृत्तिः ।

नन्वागमानुमानाभ्यां अर्थतत्त्वनिर्णयेऽलं तदुत्तरयोगेनेत्यत आह—श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् । शब्दानुमाने हि सामान्यविषये तद्विषयातिरिक्तविषया च योगजप्रज्ञा विशेषविषयत्वादित्यर्थः । लौकिकप्रत्यक्षमपि न सूक्ष्मव्यवहितविप्रकृष्टविषयमित्यपि बोध्यम् । योगजज्ञानं तु सकलविशेषग्राहकमिति अनधिगतार्थगन्तृत्वात्तस्य प्रामाण्यम् । ननु पुरुषेषु विशेषाभावात्तत्प्रज्ञा केन विशेषेण सफला स्यादिति चेन्न । अन्ततः स्वस्वोपाधिप्रतिबिम्बानामेवातीतानागतवर्तमानानां भोगरूपाणां मुक्तामुक्तसकलपुरुषेष्वन्योन्यं विशेषत्वादिति बोध्यम् ॥ ४९ ॥

## मणिप्रभा ।

तस्याः प्रमाणान्तरप्रमाणेभ्यो विषयतावैशेष्यमाह श्रुतेति । गवादिशब्दानां गोत्वादिसामान्ये शक्तिः,

न व्यक्तिविशेषेषु तेषामानन्त्येनाशक्यग्रहत्वात्। एवं व्याप्तेरपि वन्हित्वादिसामान्यं गृह्यते । अतः श्रुतानुमानप्रज्ञयोः सामान्यं वस्तु विषयः । तथाहि लोके शब्दालिङ्गज्ञानानन्तर गोवन्ह्यादिवस्तुमात्रं ज्ञायते न व्यक्तिविशेष इति स्वसाक्षिकमेतत् । ऐन्द्रियिकप्रत्यक्षं यद्यपि गोपटादिविशेषविषयं तथाऽपि सूक्ष्मव्यवहितविप्रकृष्टवस्तुविशेषः समाधिप्रज्ञाया असाधारणो विषयः । न च सूक्ष्मादिषु श्रुतानुमानप्रकाशितेषु प्रसरन्ती समाधिप्रज्ञा कथं स्वमूलश्रुतानुमानागोचरविशेषगोचरा स्यादिति वाच्यम् । बुद्धेः स्वतः सर्वग्रहणशक्तत्वात् । बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थग्रहणसमर्थमपि तमसाऽऽवृतं सद् मानमपेक्ष्याल्पविषयं भवति । यदा तु समाधिना विगततमःपटलं सर्वतः प्रकाशमानमतिक्रान्तमानमर्य्यादं भवति तदा प्रकाशनान्त्यात् किं नामागोचरः स्यात् । तस्मात् समाधिप्रज्ञा विशेषार्थगोचरत्वाद् मानान्तरविषयादन्याविषयेत्यर्थः । तदुक्तम्—

प्रज्ञाप्रासादमारुह्य ह्यशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुशोचति ॥ इति ।
जनान् समाधिशून्यान् मानभृत्यानित्यर्थः ॥ ४९ ॥

## चन्द्रिका ।

श्रुतेति । श्रौतमागमज्ञानम् । अनुमानमुक्तलक्षणम् । ताभ्यां या जायते प्रज्ञा सा सामान्यविषया, इयं निर्विचारवैशारद्यसमुपेता ताभ्यां विलक्षणा विशेषविषयत्वात्, अस्यां हि सूक्ष्मव्यवहितविप्रकृष्टा विषयाः स्फुटं भासन्ते अतस्तस्यां यत्नो विधेयः ॥ ४९ ॥

## योगसुधाकरः ।

ऋतंभरत्वोपपत्तिमाह—श्रुतेति । सूक्ष्मव्यवहितविप्रकृष्टवस्तुषु योगिप्रत्यक्षं निर्वर्तते । आगमानुमानाभ्यां तानि वस्तूनि ज्ञायन्ते । ते च श्रुतानुमानजन्ये प्रज्ञे सामान्यमेव गोचरयतः । इदं तु योगिप्रत्यक्षं विशेषगोचरत्वादृतम्भरामित्यर्थः ॥ ४९ ॥

## भोजवृत्तिः ।

अस्याः प्रज्ञायाः फलमाह—

### तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

तया प्रज्ञया जनितो यः संस्कारः सोऽन्यान्व्युत्थानजान्समाधिजांश्च संस्कारान्प्रतिबध्नाति स्वकार्यकरणाक्षमान्करोतीत्यर्थः । यतस्तत्त्वरूपतयाऽनया जनिताः संस्कारा निरालंबनत्वात् अतत्त्वरूपप्रज्ञाजनितान्संस्कारान्बाधितुं शक्नुवन्ति । अतस्तामेव प्रज्ञामभ्यसेदित्युक्तं भवति ॥ ५० ॥

## भावागणेशवृत्तिः ।

ननु तथापि प्रज्ञोत्पत्तिपर्यन्तं सम्प्रज्ञातयोगापेक्षा प्रज्ञोत्पत्त्यनन्तरं सम्प्रज्ञातपरम्परया किं फलमित्याकाङ्क्षायामाह—तज्ज इति ।

तज्जः एकाग्रसाक्षात्कारधारारूपया समाधिप्रज्ञया जनितः संस्कारोऽन्येषां व्युत्थानसंस्काराणां प्रतिबन्धी स्मृत्याख्यकार्यविरोधीत्यर्थः । तथा च समाधिपरम्परया समाधिप्रज्ञासंस्कारदार्ढ्येन व्युत्थानसंस्कारस्याभिभवः क्रमेण भवति । ततश्च दुःखहेतुव्युत्थानसंस्काराभिभवरूपे प्रज्ञाकृत्ये समाप्ते प्रज्ञायामप्यलम्बुद्ध्या सर्ववृत्तिनिरोधरूपोऽसम्प्रज्ञातः स भविष्यतीति संप्रज्ञातपरम्परायाः फलमिति भावः । मोक्षान्यथानुपपत्त्यैवाविद्यासंस्कारस्य विद्यासंस्कारदार्ढ्येन नाशः सिध्यति । अविद्यासंस्कारातिरिक्तानां च संस्काराणां चित्तनाशेनैव नाशो न तु संस्कारान्तरस्य तन्नाशकत्वं कल्प्यते, गौरवात् । संस्काराणां विरोधिसंस्काराभिभावकत्वं तु लोके बहुधा सिद्धमतः संस्कारप्रतिबन्धीत्येव सूत्रितं न तु तन्नाशक इति ॥ ५० ॥

## नागोजीभट्टवृत्तिः ।

अथ सम्प्रज्ञातपरम्परायाः फलमाह—तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी । तज्जः एका-

यत्साक्षात्कारधारारूपया सम्प्रज्ञातप्रज्ञया जनितः संस्कारोऽन्येषां व्युत्थानसंस्काराणां प्रतिबन्धी तज्जन्यवृत्त्याख्यकार्यविरोधीत्यर्थः । अत्र सम्प्रज्ञातपरम्परया समाधिप्रज्ञासंस्कारदार्ढ्येन दुःखहेतुव्युत्थानसंस्काराभिभवः, तस्य धर्ममेघसमाधिना परिसमाप्तिः । स च सिद्धिकामनात्यागेन निरन्तरोत्पन्नात्सत्त्वपुरुषान्यताख्यातिप्रवाहात्सवासनाविद्यासंस्कारनिवृत्तौ तस्यामपि ख्यातौ प्रयोजनाभावेन दुःखात्मिकायामलम्प्रत्ययरूपवैराग्ये सति जायते इति ज्ञेयम् । यदुत्तरमसम्प्रज्ञातोदयः सर्वज्ञत्वादिजनकं प्रकृष्टं धर्मं मेहति वर्षतीति व्युत्पत्तेः । अस्यामवस्थायां जीवन्मुक्त उच्यते, ततः प्राक् मन्यां कामनायां भूतेन्द्रियप्रकृतिजयोत्थः स्वेच्छाभोगश्च भवति । मोक्षान्यथानुपपत्त्यैवाविद्यासंस्काराणां विद्यासंस्कारदार्ढ्येन नाशः । अविद्यासंस्कारातिरिक्तसंस्काराणां च चित्तनाशेनैव नाशः । कस्यचित्तु सर्वज्ञत्वादिजनकधर्ममेघाभावेऽपि ज्ञानादविद्यानिवृत्तौ उत्तरक्लेशाभावात्कर्मविपाकाभावेऽपि प्रारब्धकर्मभोगहेतुवासनानामनुच्छेदेन प्रारब्धकर्मभोगानन्तरं देहपाते कैवल्यं भवतीति ज्ञेयम् । यत्तु योगस्याशेषपापनाशकत्वं श्रूयते तत्तु ज्ञानप्रतिबन्धकाशेषपापनाशपरम् । यत्तु तज्जन्यज्ञानस्य सर्वकर्मनाशकत्वं तत्प्रारब्धातिरिक्तसर्वकर्मनाशपरम् । ज्ञानेन प्रारब्धनाशे जीवन्मुक्तिप्रतिपादकश्रुतिविरोधश्च स्यात्तस्य सर्वकर्मनाशकत्वमविद्यादिक्लेशसहकार्युच्छेदेन स्वविपाकानारम्भकत्वं, प्रारब्धकर्मभोगे तु वासनैव तद्धेतुः सहकारिणीति बोध्यम् ॥ ५० ॥

## मणिप्रभा ।

नन्वनादिना शब्दादिविषयभोगसंस्कारेणातिबलीयसाऽभिहता समाधिप्रज्ञा न स्थितिं लभते इत्यत आह-तज्ज इति ।

निर्विचारसमाधिप्रज्ञाजन्यः संस्कारो व्युत्थानसंस्कारस्य प्रतिबन्धी बाधक इत्यर्थः । अनादिरपि व्युत्थानसंस्कारस्तत्त्वास्पर्शित्वात् तत्त्वस्पर्शिप्रज्ञासंस्कारेण बाध्यते । तद्बाधे व्युत्थानप्रत्यया न भवन्ति । समाधिप्रज्ञा तु भवति । ततः संस्कारः पुनः पुनरिति समाधिसंस्कारोपचयात्सर्वात्मना क्लेशक्षये सति भोगान्निर्विण्णं चित्तं पुरुषाभिमुखं विवेकख्यातिं कृत्वा कृतकृत्यं लीनं भवति समाप्ताधिकारत्वात्, ख्यातिपर्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

## चन्द्रिका ।

**तज्ज इति** । तया प्रज्ञया जनितो यः संस्कारः सोऽन्यान् व्युत्थानजान् समाधिजांश्च संस्कारान् प्रतिबध्नाति ॥ ५० ॥

## योगसुधाकरः ।

तस्याः प्रज्ञाया असंप्रज्ञातसमाधौ बहिरङ्गत्वसिद्ध्यर्थमुपकारित्वमाह—**तज्ज इति** ।

तस्याः प्रज्ञाया अभ्यासजन्यो यः संस्कारः, स चान्यान्व्युत्थानसंस्कारान्प्रतिबध्नाति बाधत इति तत्प्रतिबन्धीत्यर्थः ॥ ५० ॥

## भोजवृत्तिः ।

एवं संप्रज्ञातं समाधिमभिधायासंप्रज्ञातं वक्तुमाह—

**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥**

तस्यापि संप्रज्ञातस्य निरोधे प्रविलये सति सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयाद्या या संस्कारमात्राद्वृत्तिरुदेति तस्यास्तस्या नेति नेतीति केवलं पर्युदसनान्निर्बीजः समाधिराविर्भवति । यस्मिन्सति पुरुषः स्वरूपनिष्ठः शुद्धो भवति ।

तत्राधिकृतस्य(१) योगस्य लक्षणं चित्तवृत्तिनिरोधपदानां च व्याख्यानमभ्यासवैराग्यलक्षणं तस्योपायद्वयस्य स्वरूपं भेदं चाभिधाय संप्रज्ञातासंप्रज्ञातभेदेन योगस्य मुख्यामुख्यभेदमुक्त्वा योगाभ्यासप्रदर्शनपू-

---

(१) तदत्राधिकृतस्येति पाठा० ।

र्वकं विस्तरेणोपायान्प्रदर्श्य सुगमोमायप्रदर्शनपरतयेश्वरस्य स्वरूपप्रमाणप्रभाववाचकोपासनाक्रमं(१) तत्फलानि [च] निर्णीय चित्तविक्षेपास्तत्सहभुवश्च दुःखादीन्विस्तरेण च तत्प्रतिषेधोपायानेकतत्त्वाभ्यासमैत्र्यादान्प्राणायामादीन्सम्प्रज्ञातासम्प्रज्ञातपूर्वाङ्गभूतविषयवती प्रवृत्तिरित्यादीन् (च) आख्यायोपसंहारद्वारेण च समापत्तिं लक्षणफलसहितां(२) स्वस्वविषयसहितां चोक्त्वा(३) संप्रज्ञातासंप्रज्ञातयोरुपसंहारमभिधाय सबीजपूर्वको निर्बीजः समाधिरभिहित इति व्याकृतो योगपादः ॥ ५१ ॥

इति श्रीधारेश्वरभोजराजाविरचितायां राजमार्तण्डाभिधानायां पातञ्जलयोगशास्त्रसूत्रवृत्तौ योगाख्यः प्रथमपादः ॥ १ ॥

## भावागणेशवृत्तिः ।

क्षीणवृत्तेरभिजातस्येत्यादिसूत्रैः संप्रज्ञातस्य फलं प्रपञ्चितम् । असंप्रज्ञातस्य फलमुच्यते—**तस्यापीति**।

पूर्वपूर्वासंप्रज्ञाते तावत्प्रज्ञैव निरुध्यते । प्रज्ञासंस्कारस्य तानवमात्रम् । एवं क्रमेण तस्यापि प्रज्ञाकृतसंस्कारस्याप्यसंप्रज्ञातपरम्परया निरोधे अत्यन्ताभिभवे जायमाने चरमासंप्रज्ञातव्यक्तिर्निर्बीजयोगस्य परा काष्ठा भवति । अपुनरुत्थानेत्यर्थः । सैष च महानिद्रा परमो मोह इति गीयते । अयं च योगेन स्वेच्छया मोक्षः श्रुतिषूक्तो बहूनाम् । तदानीं च पुरुषार्थसमापत्त्या चित्तस्यात्यन्तलयात्तदाश्रितानां दग्धसंस्कारभावानां नाश इति । सर्वनिरोधादिति निर्बीजत्वे हेतुरुक्तः । यतः प्रज्ञा तत्संस्कारश्चात्यन्तं विलापितौ, अतो दुःखबीजैः संस्कारादिभिः शून्यत्वान्निर्बीज इति । पूर्वपूर्वासंप्रज्ञातेषु तु निर्बीजजातीयतया निर्बीजत्वव्यवहारः । अत्र सर्ववृत्तिनिरोधस्य संप्रज्ञातकृताखिलसंस्कारोन्मूलकत्ववचनात्तस्य संस्कारजनकत्वं सिध्यति । क्रमेणैव ह्यसंप्रज्ञातपरम्परया चरमासंप्रज्ञाते निःशेषतः संप्रज्ञातसंस्कारदाहो वक्तव्यः । तत्र पूर्वपूर्वासंप्रज्ञातानां विनष्टतया संस्कारातिरिक्तं द्वारं न सम्भवति । तथा उत्तरोत्तरासंप्रज्ञातेषु कालवृद्ध्यापि पूर्वपूर्वासंप्रज्ञातानां संस्कारजनकत्वं सिध्यति । संस्कारवृद्ध्यैव कालवृद्ध्यौचित्यादिति । ननु ज्ञानेन प्रारब्धातिरिक्ताखिलकर्मक्षये प्रारब्धस्य भोगेन समाप्त्या कर्माभावादेवापुनर्जन्मरूपो मोक्षो भविष्यति किमर्थमसंप्रज्ञातेनाखिलसंस्कारोन्मूलनमपेक्ष्यत इति चेत् । प्रारब्धस्यातिक्रमणाज्झटिति नश्यति मोक्षार्थमित्यवेहि । भोगवासनारूपस्य हि सहकारिण उच्छेदे सति प्रारब्धमपि कर्म फलाक्षमं भवतीति दिक् ॥ ५१ ॥

इति श्रीभावागणेशभट्टकृतायां योगदीपिकायां पातञ्जलवृत्तौ समाधिपादः प्रथमः ॥ १ ॥

## नागोजीभट्टवृत्तिः ।

ननु व्युत्थानसंस्काराभिभवेऽपि प्रज्ञासंस्काराभिभवाभावात्तत्प्रवाहानिवृत्तौ तत्रैव जन्मनि शीघ्रं मोक्षो न स्यादत आह—**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः**। परवैराग्येण स्वसंस्कारद्वारा प्रज्ञाकृतसंस्काराणां प्रज्ञायाश्च निरोधे कारणाभावेन कार्यानुत्पादान्निर्बीजः समाधिर्भवतीत्यर्थः। तत्र पूर्वपूर्वासंप्रज्ञातसंस्कारस्याप्युत्तरोत्तरासंप्रज्ञातेनात्यन्ताभिभवे जायमाने चरमासंप्रज्ञातो निर्बीजकाष्ठा भवति। उत्तरोत्तरासंप्रज्ञातेषु कालवृद्ध्या पूर्वपूर्वासंप्रज्ञातानां संस्कारजनकत्वं सिध्यति संस्कारवृद्ध्यैव कालवृद्ध्यौचित्यात् । स च यथायथातिशीयते तथातथा तत्त्वज्ञानपर्यन्ताखिलसंस्कारान् संप्रज्ञातयोगजांस्तनूकरोति । एवं पूर्वपूर्वसंस्कारसहकृतचरमासंप्रज्ञातेन निःशेषतः प्रज्ञातत्संस्कारदाहः । ततः प्रारब्धमपि कर्म न स्वविपाकसमर्थम् , सहकारिणां दग्धत्वात् । प्रारभवीयभोगसंस्कारा हि तत्सहकारिणः ततः पुरुषार्थसमाप्त्या चरिताधिकारं चित्तमसमाप्तभोगकेनैव प्रारब्धकर्मणा निरोधसंस्कारैश्च सह स्वकारणेऽत्यन्तं लीयते । इयमेव चित्तस्य महानिद्रा पुरुषस्य कैवल्यमात्यन्तिको दुःखात्मकाखिलदृश्यवियोगः, तदुक्तं—'मनसो-

(१) पासनानीति पाठा० ।
(२) समापत्तीः सलक्षणाः सफलाः इति पाठा० । (३) सहिताश्चोक्त्वेति पाठान्तरम् ।

भ्युदयो नाशो मनोनाशो महोदय' इति । ननु ज्ञानेनैव प्रारब्धभोगोत्तिरमोक्षसिद्धौ किमनेन योगेनेति चेन्न। प्रारब्धस्याप्यतिक्रमेण झटिति मोक्षार्थत्वात्। अत्र वदन्ति–विवेकसाक्षात्काररूपं ज्ञानं सांख्यपदवाच्यं सर्वासर्वचित्तवृत्तिनिरोधरूपो द्विविधो योगश्चोभयमपि व्यापारभेदात्स्वातन्त्र्येण मोक्षकारणमत्र शास्त्रे विवक्षितम्। तत्र केवलज्ञानेन मोक्षे जनयितव्येऽभिमाननिवर्तकात्मसाक्षात्कारपर्यन्त एव संप्रज्ञातोऽपेक्ष्यते नतु वृत्त्यन्तरवासनाक्षयाद्यर्थं संप्रज्ञानपरंपरापि । प्रारब्धसमाप्तौ तु सत्यां सर्ववासनानां चित्तेन सह नाशात्। अन्ये तु तमेवं विदित्वेति श्रुतेः कस्यचिन्स्वल्पयोगेनापि ज्ञानं, एतदन्तयोगेन तु भवत्येव ज्ञानमित्याशयः । 'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' इति गीतावाक्ये सम्यक्ख्यातं संख्या तत्त्वसाक्षात्कारस्तदुपायैर्गोबलीवर्दन्यायेन श्रवणमनननिदिध्यासनरूपैर्ज्ञानं प्राप्यते तद्योगैरपि प्राप्यते इति न तद्विरोध इत्याहुः ॥ ५१ ॥

॥ इति श्रीनागोजीभट्टीयायां पातञ्जलवृत्तौ समाधिपादः प्रथमः ॥

## मणिप्रभा ।

ननु संप्रज्ञातसमाधिप्रज्ञासंस्कारप्रचुरं चित्तं तत्प्रज्ञापरम्परामेव कुर्वत् कथं निर्बीजसमाधिं कुर्यादित्यत आह तस्यापीति ।

पुरुषख्यात्यनन्तरं परवैराग्यसंस्कारप्रचयेन तस्य संप्रज्ञातसमाधिप्रज्ञासंस्कारस्य "अपि"शब्दात्प्रज्ञायाश्च निरोधे सति सर्वस्य प्रज्ञातज्जसंस्कारप्रवाहस्य निरोधादवसिताधिकारत्वेन चित्तस्य कृत्याभावात् "निमित्तापाये नैमित्तिकापाय" इति न्यायेन निर्बीजः समाधिर्भवति । तदुक्तम्—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥ इति ।

श्रवणेन मननेन पुरुषमात्रध्यानाभ्यासो धर्ममेघाख्यः तद्रसेन परवैराग्येण प्रज्ञाप्रसादात्मना, पुरुषं साक्षात्कुर्वन्निर्बीजं योगं लभत इत्यर्थः । कालक्रमेण निर्बीजनिरोधसंस्कारप्रचये सति स्वप्रकृतौ चित्तं लीयते हेत्वभावात् । कृत्यशेषलक्षणाधिकारो हि चित्तस्य स्थितिहेतुः । न हि कृतभोगविवेकख्यातिनश्चित्तस्य कृत्यशेषोऽस्ति । तस्माच्चित्तस्य प्रलये पुरुषः स्वरूपमात्रप्रतिष्ठः केवलो मुक्त इति सिद्धम् ॥ ५१ ॥

इति मणिप्रभायां समाधिपादः ॥ १ ॥

## चन्द्रिका ।

तस्यापीति । तस्यापि निरोधे तस्य सम्प्रज्ञातस्य निरोधे प्रविलये सति सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयात् या संस्कारमात्रात् वृत्तिरुदेति तस्या नेति नेतीति पर्युदसनान्निर्बीजः समाधिराविर्भवति यस्मिन् सति पुरुषः शुद्धो भवति ॥ ५१ ॥

इति योगचन्द्रिकायां प्रथमः पादः ।

## योगसुधाकरः ।

इत्थमसंप्रज्ञातसमाधेर्बहिरङ्गसाधनमभिधाय निरोधप्रयत्नस्यान्तरङ्गसाधनतां सूचयन्निर्बीजमुपसंहरति—तस्यापीति ।

परवैराग्यसहकृतविरामप्रत्ययेन प्रज्ञासंस्कारस्यापि निरोधे सत्युत्पत्स्यमानप्रज्ञासंस्कारस्य सर्वस्यापि निरोधादशेषबन्धनिवृत्तेर्निर्बीजः समाधिर्लभ्यते । तस्मिन्समाधौ लब्धे सति पुनर्व्युत्थातुमशक्तं सच्चित्तं नश्यति । ततः कूटस्थनित्यानन्ता शुद्धा चितिशक्तिः स्वे महिम्नि निरन्तरं निर्विघ्नमवतिष्ठत इत्यतिशोभनम् ॥ ५१ ॥

इति श्रीमत्पतञ्जलिप्रणीते योगशास्त्रे योगसुधाकराभिधायां वृत्तौ समाधिपादः समाप्तः ॥

# अथ द्वितीयः साधनपादः ।

### भोजवृत्तिः ।

ते ते दुष्प्रापयोगर्द्धिसिद्धये येन दर्शिताः ।
उपायाः स जगन्नाथस्त्र्यक्षोऽस्तु प्रार्थितात्तये ॥

तदेवं प्रथमे पादे समाहितचित्तस्य सोपायं योगमभिधाय व्युत्थितचित्तस्यापि कथमुपायाभ्यासपूर्वको योगः सात्म्यम् ( स्वास्थ्यम् ) उपयातीति तत्साधनानुष्ठानप्रतिपादनाय क्रियायोगमाह—

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥**

तपः शास्त्रान्तरोपदिष्टं कृच्छ्रचान्द्रायणादि । स्वाध्यायः प्रणवपूर्वाणां मन्त्राणां जपः । ईश्वरप्रणिधानं सर्वक्रियाणां तस्मिन्परमगुरौ फलनिरपेक्षतया समर्पणम् । एतानि क्रियायोग इत्युच्यते ॥ १ ॥

### भावागणेशवृत्तिः ।

समाहितचित्तस्योत्तमाधिकारिणो योगारोहयोग्यस्याभ्यासवैराग्याभ्यामेव क्रियायोगनिरपेक्षाभ्यां योगनिष्पत्तिः पूर्वपादे प्रतिपादिता । इदानीं व्युत्थितचित्तो बहिर्मुखोऽपि यथा योगयुक्तः स्यात्तानि साधनान्युच्यन्ते—तप इति ।

तपोऽत्र चित्तप्रसादाविरोधिशास्त्रोक्तोपवासादिकम् । स्वाध्यायः प्रणवजपो मोक्षशास्त्राध्ययनं वा । ईश्वरप्रणिधानं परमेश्वरे सर्वकर्मार्पणम् । न तु प्रथमपादोक्तं, तस्योत्तमाधिकारिणं प्रत्येवोक्तत्वात् । अर्पणं च कौर्मे प्रोक्तम्—

नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ इति ।

एतानि तपआदीनि क्रियारूपो योगो योगसाधनत्वादित्यर्थः । यद्यपि वक्ष्यमाणा यमनियमासनादयः सर्वेऽपि क्रियायोगास्तथापि तेभ्यः समाहृत्य प्रकृष्टसाधनत्रयं मध्यमाधिकारिणं प्रत्युपदिष्टमन्ततः केवलेनैतेनापि तीव्रतरेण योगो भवतीति सूचयितुम् ॥ १ ॥

### नागोजीभट्टवृत्तिः ।

योगाधिकारिणस्त्रिविधा मन्दमध्यमोत्तमाः क्रमेण रुरुक्षुयुञ्जानयोगारूढरूपाः । तत्रोत्तमा ये पूर्वजन्मानुष्ठितबहिरङ्गक्रियायोगसाधनतया तन्निरपेक्ष्येणैव योगारूढाः, यथा जडभरतादयस्तेषामभ्यासवैराग्याभ्यामेव योगनिष्पत्तिः पूर्वपादे प्रतिपादिता—

आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ ।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥ इति गारुडाच्च ।

त्यागोऽत्र प्रकृतत्वाद्योगान्तरायस्य बाह्यकर्मणः क्रियायोगरूपस्य । योगारूढश्च—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥

इति गीतायां लक्षितः । तत्राभ्यासश्चित्तस्य निश्चलैकाग्रताधारारूपस्थितौ ध्येयाद्बहिर्गच्छतश्चित्तस्य पुनः पुनरानयने यत्नः । वैराग्यं च तत्रतत्रालंबुद्धिरूपोपेक्षेत्युक्तम् ।

इदानीं व्युत्थितचित्तस्य मध्यमाधिकारिणो वानप्रस्थादेः क्रियायोगरूपं साधनमाह—**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः** । तपश्चित्तप्रसादाविरोधिशास्त्रोक्तोपवासादिकम्, स्वाध्यायः प्रणवादिजपः मोक्षशास्त्राध्ययनं वा । ईश्वरप्रणिधानमत्र परमेश्वरे सर्वकर्मार्पणं तत्फलन्यासश्च । अर्पणं च—

नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ इति कौर्मे उक्तम् ।

कर्मफलन्यासश्च सर्वकर्मफलानामीश्वरो भोक्तेति चिन्तनम् । यदैव जीवान् कर्मफलानि भोजयन्प-

रमेश्वरः प्रीणाति स एवेश्वरस्य तत्फलभोगः । यथार्थिभ्यो धनानि यच्छन् दाता तद्धनभोक्ता । यद्यप्यस्य नित्यानन्दभोगो नित्य एव तथापि जीवानां कर्मफलप्रदानाभिव्यक्तत्वेनैश्वर्यानुगतानन्दोत्पत्तिरौपचारिकी । यद्वा—

कामतोऽकामतो वापि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥

इत्यर्पणम् । फलन्यासश्च फलमनभिसंधाय कर्मकरणम् । एते क्रियारूपा योगा योगसाधनत्वादिति भावः । यद्यपि वक्ष्यमाणा यमादयोऽपि क्रियायोगा एव, तथापि तेभ्यः समुद्धृत्य प्रकृष्टं साधनत्रयं मध्यमाधिकारिणं युञ्जानं प्रति उपदिष्टमेतैरपि तीव्रतरैर्योगो भवतीति सूचयितुम् । मध्यमाधिकारिणा अभ्यासवैराग्यादिकं यथाशक्त्यनुष्ठेयम् ॥ १ ॥

## मणिप्रभा ।

पूर्वस्मिन्पादे योगमुद्दिश्य लक्षणमुक्त्वा वृत्तीर्निरूप्य तन्निरोधोपायाभ्यासवैराग्ये प्रतिपाद्य चित्तस्थित्युपायान् कांश्चिदुक्त्वा द्विविधो योगः सावान्तरभेदः प्रतिपादितः । तत्राभ्यासवैराग्ये चित्तशुद्धिसाध्ये इति मत्वा तस्य शुद्धिहेतुमादौ क्रियायोगमाह—**तप इति** ।

पूर्वपादोक्तस्य योगस्यास्मिन्पादे साधनान्युच्यन्त इत्यनयोः पादयोः सङ्गतिः । ब्रह्मचर्यगुरुसेवासत्यवचनकौष्ठमौनाकारमौनस्वाश्रमधर्मद्वन्द्वसहनामिताशनादिकं तपः, न कायशोषः । धातुवैषम्ये योगविघातात् । स्वाध्यायः प्रणवश्रीरुद्रपुरुषसूक्तादीनां पवित्राणां जपो मोक्षशास्त्राध्ययनं च । फलाभिसन्धिं विना कृतानां कर्मणां परमगुरावीश्वरे समर्पणमीश्वरप्रणिधानम्, तानि क्रियारूपो योगो योगसाधनत्वादित्यर्थः ॥ १ ॥

## चन्द्रिका ।

समाहितचित्तस्य योगमभिधाय व्युत्थितचित्तस्य योगः कथं सिद्ध्यतीति तत्साधनप्रतिपादनाय क्रियायोगमाह—**तप इति** ।

तपः कृच्छ्रादि, स्वाध्याय ओंकारपूर्वकमन्त्राणां जपः, सर्वक्रियाणां समपर्णमेतानि क्रियायोगः ॥१॥

## योगसुधाकरः ।

परापश्यन्त्यादिभेदाभिन्नामेकां निसर्गतः ।
चिदानन्दमयीं नित्यां वाचं कांचिदुपास्महे ॥

पूर्वं सावान्तरभेदं सान्तरङ्गसाधनं सफलं समाधिमभिधायाधुना पूर्वाभिहितसाधनेऽप्रवर्तमानमानसमपक्वकषायकरणं प्रति बहिरङ्गसाधनं क्रियायोगमाह—**तप इति** ।

हितमितमेध्याशनं तपः । परमपवित्रप्रणवादिमन्त्रजपः स्वाध्यायः । ईश्वरे लीलया स्वीकृतातिमनोहराङ्गे परमगुरौ कायवाङ्मनोभिर्निर्वर्तितो भक्तिविशेषः प्रणिधानम् । तानि क्रियारूपत्वाद्योगसाधनत्वाच्च क्रियायोग इति शुद्धसारूप्यलक्षणाश्रयणेन निरूप्यन्ते 'आयुर्घृतम्' इतिवदित्यर्थः ॥ १ ॥

## भोजवृत्तिः ।

स किमर्थ इत्यत आह —

### (१)समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

क्लेशा वक्ष्यमाणास्तेषां तनूकरणं स्वकार्यकरणप्रतिबन्धः । समाधिरुक्तलक्षणस्तस्य भावना चेतसि पुनः पुनर्निवेशनं सोऽर्थः प्रयोजनं यस्य स तथोक्तः । एतदुक्तं भवति—एते तपःप्रभृतयोऽभ्यस्यमानाश्चित्तगतानविद्यादीन्क्लेशाञ्छिथिलीकुर्वन्तः समाधेरुपकारकतां भजन्ते । तस्मात्प्रथमतः(२) क्रियायोगावधानपरेण योगिना भवितव्यमित्युपदिष्टम् ॥ २ ॥

---

(१) क्रियायोगस्य किं फलमित्यत आह समाधीत्यादि ।

(२) प्रथममिति पाठान्तरम् ।

### भावागणेशवृत्तिः ।

तपआदीनां योगोत्पादने द्वारमाह—**समाधीति** ।

स क्रियायोगः योगहेतुसमाधिं चित्तैकाग्र्यमुत्पादयति, वक्ष्यमाणांश्च क्लेशान्योगप्रतिबन्धकान्प्रकर्षेण तनूकरोति सत्त्वशुद्ध्यादिद्वारेणेत्यर्थः । तनुत्वं च विवेकख्यातिप्रतिबन्धकतावच्छेदकस्योत्कटत्वस्याभावः ॥२॥

### नागोजीभट्टवृत्तिः ।

एवं योगोत्पादने द्वारमाह—**समाधिभावनार्थः क्लेशतनूकरणार्थश्च** । स क्रियायोगः समाधेर्योगहेतुचित्तैकाग्र्यस्योत्पादकः, वक्ष्यमाणक्लेशानां योगप्रतिबन्धकानां सत्त्वशुद्धिद्वारेण तनूकरणार्थश्चेत्यर्थः । तनुत्वं च विवेकख्यातिप्रतिबन्धकतावच्छेदकोत्कटत्वस्याभावः । एवञ्च प्रतिबन्धकाभावाद्विवेकख्यात्यात्मकप्रसंख्यानोदये ते क्लेशा दग्धबीजवद्वन्ध्या भवन्ति । वन्ध्येषु च तेषु समाप्ताधिकारं चित्तं विलीयते इति दिक् । तत्र क्रियायोगस्य क्लेशतानवं दृष्टादृष्टद्वारा फलमभिमानरागद्वेषादिप्राबल्ये क्रियायोगासंभव एव, संभवे वाङ्गविकल इति स्वनिष्पत्तये स क्लेशतानवं करोति । एवं क्रियायोगेन चित्तशुद्धौ अधर्माख्यकारणतानवादविद्यादेरपि तानवं भवति । एवं योगोऽपि क्रियायोगस्य दृष्टादृष्टद्वारा फलम् । तत्र सत्त्वशुद्धिरदृष्टद्वारम् । दृष्टं तु चित्तनियमनम् । एवं क्रियायोगेन क्लेशतानवे सति अन्तरा क्लेशैरप्रतिबद्धो विवेकख्यातिप्रवाहः साक्षात्कारपर्यवसायी भवति । ततस्तेन साक्षात्कारेणाग्निना दग्धबीजकल्पाः क्लेशाः प्ररोहसमर्था न भवन्ति । एषा जीवन्मुक्तिः । ततः प्रारब्धसमाप्तौ चित्तेन सह दग्धबीजकल्पा अनागतावस्थाः सूक्ष्मक्लेशाः तत्कारणे लीयन्ते । ततः कारणाभावात्पुनर्जन्माभाव इति परममुक्तिः । न च ज्ञानाग्निचित्ते विद्यमान एव क्लेशानां नाशोऽस्तु किं दाहकल्पनयेति वाच्यम् । कार्यानागतावस्थाया एव कारणशक्तित्वेन शक्तेश्च यावद्द्रव्यभावितया अग्न्यादिनिष्ठदाहादिशक्तेर्दृष्टत्वात् चित्ते विद्यमाने तन्नाशासंभवेन दाहकल्पनात् । एष एवार्थोऽग्रिमसूत्रेषु स्फुटः ॥ २ ॥

### मणिप्रभा ।

क्रियायोगस्य फलमाह—**समाधीति** ।

निबिडेषु क्लेशेषु सत्सु समाधिर्न सिध्यति । तस्मात्क्रियायोगः क्लेशान् तनूकृत्य समाधिं भावयति । तनुकरणं क्लेशानां सदोद्भवतां कादाचित्क उद्भवः । भावनं समाधेरुत्पादनम्, तदर्थः फलं यस्य स तथोक्तः । क्रियायोगेन क्लेशच्छिद्रेषु लब्धावसरः समाधिः विवेकख्यातिमुत्पाद्य सवासनक्लेशान्दहतीति भावः ॥ २ ॥

### चन्द्रिका ।

**समाधीति** । उक्तलक्षणसमाधिभावनार्थो वक्ष्यमाणक्लेशशिथिलीकरणार्थश्च ॥ २ ॥

### योगसुधाकरः ।

स किमर्थं इत्यत आह—**समाधीति** ।

समाधेर्भावनं निष्पादनमर्थः प्रयोजनं यस्य स तथोक्तः, क्लेशानां तनूकरणं शिथिलीकरणमर्थः प्रयोजनं यस्य स तथोक्तः । एतदुक्तं भवति—दीर्घकालनैरन्तर्यसत्कारानुबन्धितपआदिक्रियायोगानुष्ठानेन क्लेशा विशरारुतामिताः सन्तः पुरुषान्यताख्यातावनुपप्लवायां जातायां समूलकाषं कषिता भवन्तीति ॥ २ ॥

### भोजवृत्तिः ।

क्लेशतनूकरणार्थं इत्युक्तं, तत्र के क्लेशा इत्यत आह—

## अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः(१) ॥ ३ ॥

अविद्यादयो वक्ष्यमाणलक्षणाः पञ्च, ते च बाधनालक्षणं परितापमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति । ते हि चेतसि प्रवर्तमानाः संस्कारलक्षणं(२) गुणपरिणामं दृढयन्ति ॥ ३ ॥

(१) पञ्च क्लेशाः—इति पाठान्तरम् । (२) संसारलक्षणमिति पाठा० ।

### भावागणेशवृत्तिः ।

इतः परं क्लेशाः कियन्तो वा तनूकरणस्य वा किं फलमित्यादिकं महाप्रघट्टकेन प्रदर्शयितुमुपक्रमते—अविद्येति ।

अविद्यादयः पञ्च क्लेशत्वेन परिभाषिताः क्लेशाख्या दुःखनिदानत्वादित्यर्थः ॥ ३ ॥

### नागोजीभट्टवृत्तिः ।

अथ क्लेशानाह—अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः । एते पञ्च क्लेशा इत्यर्थः । ते हि चेतसि वर्तमानाः संसारधर्माधर्मकर्ममयं गुणपरिणामं द्रढयन्ति । कर्मभिः क्लेशाः क्लेशैश्च कर्माणीत्यनवस्था तु बीजाङ्कुरवदनादित्वान्न दोषाय ॥ ३ ॥

### मणिप्रभा ।

अथ क्लेशाः कीदृशाः कियन्तो वेत्यत आह—अविद्येति ।

क्लिश्यन्ति कर्मतत्फलप्रवर्तकाः सन्तः पुरुषं दुःखाकुर्वन्तीति क्लेशाः ते च पञ्चेत्यर्थः ॥ ३ ॥

### चन्द्रिका ।

अविद्येति । वक्ष्यमाणलक्षणा अविद्यादयस्तापं जनयन्तः क्लेशशब्दवाच्या भवन्ति ॥ ३ ॥

### योगसुधाकरः ।

के ते क्लेशाः कियन्त इत्यपेक्षायामाह—अविद्येति ।

पुरुषं क्लेशयन्ति दुःखाकुर्वन्तीति क्लेशाः । ते पञ्चेत्यर्थः ॥ ३ ॥

### भोजवृत्तिः ।

सत्यपि सर्वेषां तुल्ये क्लेशत्वे मूलभूतत्वादविद्यायाः प्राधान्यं प्रतिपादयितुमाह—

## (१) अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥

अविद्या मोहः, अनात्मन्यात्माभिमान इति यावत् । सा क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां प्रत्येकं प्रसुप्ततन्वादिभेदेन चतुर्विधानाम् । अतो यत्राविद्या विपर्ययज्ञानरूपा शिथिलीभवति तत्र क्लेशानामस्मितादीनां नोद्भवो दृश्यते । विपर्यज्ञानसद्भावे च तेषामुद्भवदर्शनात्स्थितमेव मूलत्वमविद्यायाः । प्रसुप्ततनुविच्छिन्नोदाराणामिति । तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावे स्वकार्यं नाऽऽरभन्ते ते प्रसुप्ता इत्युच्यन्ते-यथा बालावस्थायां, बालस्य हि वासनारूपेण स्थिता अपि क्लेशाः प्रबोधकसहकार्यभावे नाभिव्यज्यन्ते । ते तनवो ये स्वस्वप्रतिपक्षभावनया शिथिलीकृतकार्यसंपादनशक्तयो वासनावशेषतया चेतस्यवस्थिताः प्रभूतां सामग्रीमन्तरेण स्वकार्यमारब्धुमक्षमाः-यथाऽभ्यासवतो योगिनः । ते विच्छिन्ना ये केनचिद्बलवता क्लेशेनाभिभूतशक्तयस्तिष्ठन्ति—यथा द्वेषावस्थायां रागः, रागावस्थायां वा द्वेषः, न ह्यनयोः परस्परविरुद्धयोर्युगपत्संभवोऽस्ति । त उदारा ये प्राप्तसहकारिसंनिधयः स्वं स्वं कार्यमभिनिर्वर्तयन्ति-यथा सदैव योगपरिपन्थिनो व्युत्थानदशायाम् । एषां प्रत्येकं चतुर्विधानामपि मूलभूतत्वेन स्थिताऽप्यविद्याऽन्वयित्वेन प्रतीयते । न हि क्वचिदपि क्लेशानां विपर्ययान्वयनिरपेक्षाणां स्वरूपमुपलभ्यते । तस्यां च मिथ्यारूपायामविद्यायां(२) सम्यग्ज्ञानेन निवर्तितायां दग्धबीजकल्पानामेषां न क्वचित्प्ररोहोऽस्ति । अतोऽविद्यानिमित्तत्वमविद्यान्वयश्चैतेषां निश्चीयते; अतः सर्वेऽपि अविद्याव्यपदेशभाजः । सर्वेषां च क्लेशानां चित्तविक्षेपकारित्वाद्योगिना प्रथममेव तदुच्छेदे यत्नः कार्य इति ॥ ४ ॥

### भावागणेशवृत्तिः ।

अविद्यादयोऽग्रे लक्षणीयाः । आदौ तु स्थूलसूक्ष्माणां सर्वेषामेव क्लेशानां ज्ञाननाश्यत्वं वक्ष्यमाणमुपपादयितुमविद्यामूलकत्वमन्यक्लेशानामाह—अविद्येति ।

उत्तरेषामस्मितादीनां प्रसुप्तादिचतुर्विधानामप्यविद्या क्षेत्रं प्रसवभूमिरित्यन्वयः । यद्यप्यविद्यापञ्चक-

---

(१) हेयानां क्लेशानामविद्यामूलत्वं दर्शयति अविद्येत्यादि ।

(२) मिथ्याज्ञानरूपायामिति पाठान्तरम् ।

स्यान्तःकरणमेव प्रसवभूमिस्तथाप्यविनाभावरूपेणोपादानसाधर्म्येणात्र निमित्तकारणस्यापि प्रसवभूमित्वं गौणम्, यदेव हि वस्तु अहं ममेत्यविद्याविषयो भवति तत्रैव रागादिकं भवतीति। अत्र प्रसुप्तिर्ज्ञानाग्न्यदग्धयाऽव्यक्तावस्थयाऽवस्थानम्। ज्ञानाग्निदग्धानां हि कदाप्यनुत्पादात्प्रसवभूम्यसंभवः। तनुत्वं तु पूर्वसूत्रे व्याख्यातम्। विच्छिन्नत्वं च अल्पप्रतिबन्धवशाद्व्यञ्जकसत्त्वेऽप्यन्तरान्तरानभिव्यक्तिरतः सुषुप्तितोऽस्य भेदः, व्यञ्जकविलम्बेन द्वित्रिजन्मादिबहुकालव्याप्त्यानभिव्यक्तेरेव प्रसुप्तित्वात्, प्रशब्देन प्रकर्षलाभात्। तदारब्धं चाभिव्यक्तत्वमुदारत्वमिति ॥ ४ ॥

## नागोजीभट्टवृत्तिः।

अथ सर्वेषां क्लेशानां ज्ञाननाश्यत्वमुपपादयितुमविद्यामूलकत्वमन्यक्लेशानामाह—**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्।** उत्तरेषामस्मितादीनां प्रसुप्तादिभेदेन चतुर्विधानामप्यविद्या क्षेत्रं प्रसवभूमिरित्यर्थः॥ यद्यप्यन्तःकरणमेव सर्वेषां प्रसवभूमिः, तथाप्यविनाभावरूपेण तत्संश्लिष्टत्वरूपेण चोपादानसाधर्म्येणात्र निमित्तकारणस्यापि प्रसवभूमित्वं गौणम्। यदेव हि अहं ममेत्यविद्याविषयो भवति तत्रैव रागादिकं भवति। तत्र प्रसुप्तिर्ज्ञानाग्न्यदग्धया अव्यक्तावस्थया कार्योन्मुखतारूपयाऽवस्थानम्। यथा विदेहप्रकृतिलयानाम्। विवेकख्यातिरूपज्ञानाग्निदग्धानां न कदापि कार्योन्मुखता इति सा पञ्चमी अवस्था। तनुत्वं द्वितीयसूत्रे व्याख्यातम्॥ विच्छिन्नत्वमल्पप्रतिबन्धवशाद्व्यञ्जकसत्त्वेऽप्यन्तरान्तरानभिव्यक्तिरतः प्रसुप्तितोऽस्य भेदः। व्यञ्जकविलम्बेन तज्जन्मपर्यन्तबहुकालव्याप्त्यनभिव्यक्तेरेव प्रसुप्तित्वात्, प्रशब्देन प्रकर्षलाभात्। विच्छिन्नत्वं यथा रागकाले द्वेषस्य द्वेषकाले रागस्य क्रोधसमाविष्टेन मिष्टान्नस्यापि त्यागात्। यथा वा विषयान्तररागेण विषयान्तररागः। स हि तदा प्रसुप्तस्तनुर्विच्छिन्नश्च। प्रतिपक्षभावनाऽप्रतिबन्धकत्वं च तनुत्वम्। उदारत्वं विषये लब्धवृत्तित्वाख्यमभिव्यक्तत्वम्।

> प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम्।
> विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्॥ इति संग्रहः॥ ४॥

## मणिप्रभा।

तत्र चतुर्णामविद्याकार्यत्वेनाविद्यात्मत्वमाह—**अविद्येति**।

उत्तरेषामस्मितादीनामविद्या क्षेत्रं प्रसवभूमिः। तेषामवान्तरभेदमाह प्रसुप्ताः तनवो विच्छिन्ना उदाराश्च तेषाम्। तत्र विदेहप्रकृतिलयानां योगिनां क्लेशाः प्रसुप्ताः विवेकख्यात्यभावेनादग्धतया शक्तिरूपेणावस्थानाद् अत एवान्ते पुनरुद्भवन्ति। क्रियायोगिनां तनवः। विषयसङ्गिनां विच्छिन्ना उदाराश्च भवन्ति। यथा चैत्रस्य यस्यां रागस्तत्र क्रोधो विच्छिन्नो रागः उदारः। एवं यत्र क्रोध उदारस्तत्र रागो विच्छिन्नः, कालेनोदारो भूत्वा पुरुषपशुं क्लेशयति। एते क्लेशा अविद्यामूलाः। तस्याः पुरुषापरोक्ष्यख्यात्या निवृत्तौ निवर्तन्ते। यथा जीवन्मुक्तस्य क्लेशाः। क्षीणा इति पञ्चमी क्लेशानामवस्था द्रष्टव्या ४॥

## चन्द्रिका।

**अविद्येति**। अविद्या अनात्मन्यात्माभिमानः सा क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां प्रत्येकं सुप्तादिभेदेन चतुर्विधानाम्। तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावे स्वकार्यं नारभन्ते ते प्रसुप्ताः(१)। तनवः सूक्ष्माः(२)। विच्छिन्नाः परस्परमितरोत्कर्षे उच्छिन्नाः(३)। ये स्वं स्वं कार्यमभिनिर्वर्त्तयन्ति ते उदारास्तेषाम्॥ ४॥

---

(१) यथा बालानां वासनारूपेणावस्थिताः क्लेशाः प्रबोधकाभावेन न व्यज्यन्ते।

(२) ये स्वस्वप्रतिपक्षभावनया शिथिलीकृतकार्यसम्पादनशक्तयः वासनारूपेणावस्थिताः न स्वकार्यमारब्धुं क्षमाः।

(३) ये केनचिद्बलवता क्लेशेन अभिभूतशक्तयः न स्वकार्यक्षमाः यथा उत्कटरागावस्थायां द्वेषः द्वेषावस्थायां वा रागः।

## योगसुधाकरः।

अथाऽस्मितादीनामविद्यानिदानत्वमाह—**अविद्येति**

प्रसुप्तास्तनवो विच्छिन्ना उदाराश्चास्मितादयश्चत्वारः। तेषामुत्तरेषामविद्या भावरूपो विपर्ययः, सा क्षेत्रं प्रसवभूमिः। तत्र प्रसुप्तत्वं प्रबोधसहकारस्याभावेनानभिव्यक्तिः। तनुत्वं प्रतिपक्षभावनया शिथिलीकरणम्। विच्छिन्नत्वं बलवता क्लेशेनाभिभवः। उदारत्वं सहकारिसंनिधिवशात्कार्यकारित्वमित्यर्थः॥४॥

## भोजवृत्तिः।

अविद्याया लक्षणमाह—

**(१) अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या॥५॥**

अतस्मिंस्तदिति प्रतिभासोऽविद्येत्यविद्यायाः सामान्यलक्षणम्। तस्या एव भेदप्रतिपादनम्—अनित्येषु घटादिषु नित्यत्वाभिमानोऽविद्येत्युच्यते। एवमशुचिषु कायादिषु शुचित्वाभिमानः, दुःखेषु च विषयेषु सुखत्वाभिमानः, अनात्मनि शरीर आत्मत्वाभिमानः। एतेनापुण्ये पुण्यभ्रमोऽनर्थे चार्थभ्रमो व्याख्यातः॥५॥

## भावागणेशवृत्तिः।

अविद्यादीन्पञ्च क्रमण पञ्चभिः सूत्रैर्लक्षयति—**अनित्येति**।

यथासंख्यमनित्यादिचतुष्के नित्यादिचतुष्कबुद्धिरविद्येत्यर्थः। इदं चोपलक्षणम्। नित्यादिचतुष्टयेऽनित्यादिचतुष्टयबुद्धिः, पापादौ पुण्यादिबुद्धिरपि विवक्षिता, तासामपि संसारहेत्वविद्यात्वात्। शुक्तिरजताद्यविद्यानां तु संसाराहेतुत्वान्नात्र गणना। सूत्रोक्ताविद्यास्वप्यनात्मन्यात्मबुद्धिरेव संसारस्य मूलकारणमुत्तरसूत्रे वक्ष्यमाणत्वात्,

> अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः।
> अविद्यातरुसंभूतिबीजमेतद्द्विधा स्थितम्॥ इति स्मृतेः॥

अन्यास्त्वविद्यास्तच्छेषतयैव संसारहेतव इति। तत्रानित्ये नित्यबुद्धिर्यथा ध्रुवा पृथिवी, अमृता देवाः, इत्याद्या। अशुचौ शुचिबुद्धिश्च शरीरं पवित्रमित्यादि। तथा दुःखप्रचुरत्वाद्दुःखे जगति सुखप्रचुरबुद्धिस्तृतीयाऽविद्या। तथा अनात्मनि चतुर्विंशतितत्त्व आत्मबुद्धिश्चतुर्थी॥५॥

## नागोजीभट्टवृत्तिः।

तत्राविद्यालक्षणमाह—**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या**। यथासंख्यमनित्यादिचतुष्के नित्यादिचतुष्कबुद्धिश्चतुर्धर्मावच्छिन्ने नित्यत्वादिचतुर्धर्मावच्छिन्नत्वबुद्धिरविद्येत्यर्थः। उपलक्षणं चैतत्। नित्यादिचतुष्टयेऽनित्यादिचतुष्टयबुद्धिः पापादौ पुण्यादिबुद्धिरप्येवं तासामपि संसारहेत्वविद्यात्वात्। शुक्तिरजताद्यविद्यानां तु तदहेतुत्वान्नात्र गणना। सूत्रोक्ताविद्यास्वपि अनात्मन्यात्मबुद्धिरेव संसारबीजम्। अत्रात्मशब्द आत्मीयपरोऽपि तेनानात्मीये आत्मीयबुद्धिरपि सङ्गृहीता—

> अनात्मन्यात्मबुद्धिर्याऽस्वे स्वीयमिति या मतिः।
> अविद्यातरुसंभूतिबीजमेतद्द्विधा स्थितम्॥ इति स्मृतेः।

अन्यास्त्वविद्यास्तच्छेषतयैव संसारहेतवः। तत्रानित्ये नित्यबुद्धिर्यथा ध्रुवा पृथिवी, अमृता देवा इत्यादि। तत्रैषां नित्यत्वामृतत्वे मन्यमानास्तद्भावाय तत्तदुपासनां सोमपानादि चाचरन्ति। द्वितीयाऽशुचौ शरीरे शुचिबुद्धिः।

> स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि।

---

(१) अनित्येषु नित्यख्यातिः अशुचिषु शुचिख्यातिः दुःखेषु सुखख्यातिः अनात्मसु आत्मख्यातिरित्यर्थः। अत्र "एषा भवति चतुष्पदा अविद्ये"ति भाष्यम्।

कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥

स्थानं मातुरुदरम् । उपष्टम्भोऽशितपीतादिरसभावः । निष्यन्दः स्वेदः । निधनं मरणं, मृतशरीरस्पर्शे स्नानाद्युक्तेः । कामिनीनामङ्गरागादिभिः सुगन्धितेव मृज्जलादिभिराधेयशौचम् । कान्तादिमुखे चन्द्रत्वादिबुद्धिरप्येवम् । एवमपुण्ये हिंसादौ पुण्यप्रत्ययः । अर्जनादिदुःखबहुलतयाऽनर्थे धनादावर्थप्रत्ययोऽपि जुगुप्सितत्वेनाशुचित्वात् । सुखस्यापि दुःखतया वक्ष्यमाणत्वात्तन्मये जगति सुखबुद्धिः । अनेन सुखरूपमीश्वरस्य पुरुषमात्रस्य सिद्धम् । तथानात्मनि चतुर्विंशतितत्त्वात्मके आत्मत्वबुद्धिरात्मीयत्वबुद्धिश्चतुर्थी । एवं च विद्याविरोधि विपरीतज्ञानमविद्येत्युक्तम् ॥ ५ ॥

## मणिप्रभा ।

तेष्वविद्यारूपमाह—**अनित्येति** ।

अतस्मिंस्तद्बुद्धिरित्यर्थः । अमरा देवा इत्यनित्येषु नित्यत्वभ्रान्त्या देवत्वार्थं कर्म कृत्वा बध्यन्ते । एवमशुचौ स्त्रीकाये शुचित्वभ्रान्त्या बध्यन्ते । तदुक्तं भगवता वेदव्यासेन—

स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥ इति ।

विण्मूत्रसङ्कुलं मातुरुदरं स्थानं, शुक्रशोणितं बीजम्, अन्नपरिणामश्लेष्मादिरुपष्टम्भः, सर्वद्वारैर्मलानां स्रवणं निष्यन्दः, निधनं मरणं, तेन हि श्रोत्रियकायोऽप्यत्यन्ताशुचिर्भवति । आधेयशौचत्वं स्नानानुलेपनादिना शुचित्वापादनं, तथा परिणामदुःखे भोगे सुखत्वभ्रान्तिः । अनात्मनि बुध्यादावात्मत्वख्यातिः । अविद्या तत्त्वविद्याविरोधिनीत्यर्थः । यद्यपि शुक्तिरूप्याद्यविद्याः सन्ति तथाऽपीयं चतुर्विधैवाविद्या बन्धमूलमिति भावः ॥ ५ ॥

## चन्द्रिका ।

**अनित्येति** । अतस्मिंस्तदिति प्रतिभासोऽविद्येत्यविद्यालक्षणम् । घटकायदुःखशरीरेषु नित्यशुचिसुखात्मत्वाभिमानोऽविद्या ॥ ५ ॥

## योगसुधाकरः ।

अथाविद्यास्वरूपमाह—**अनित्येति** ।

अतस्मिंस्तद्बुद्धिर्विपर्यय इत्युक्तं भवति । तद्यथा—अनित्ये स्वर्गादौ नित्यत्वाभिमानः । अशुचौ मांसासृक्पूयविण्मूत्रादिशालिनि काये शुचित्वप्रत्ययः । दुःखे स्रक्चन्दनवनितादौ सुखत्वारोपः । अनात्मनि देहादावात्मबुद्धिः इत्याविद्या चतुष्पदेत्यर्थः ॥ ५ ॥

## भोजवृत्तिः ।

अस्मितां लक्षयितुमाह—

### (१)दृग्दर्शनशक्त्योरेकात्मतै(ते)वास्मिता ॥ ६ ॥

दृक्शक्तिः पुरुषः, दर्शनशक्ती रजस्तमोभ्यामनभिभूतः सात्त्विकः परिणामोऽन्तःकरणरूपः, अनयोर्भोग्यभोक्तृत्वेन जडाजडत्वेनात्यन्तभिन्नरूपयोरेकताभिमानोऽस्मितेत्युच्यते, यथा प्रकृतिर्वस्तुतः कर्तृत्वभोक्तृत्वरहिताऽपि कर्त्र्यहं भोक्त्र्यहमित्यभिमन्यते । सोऽयमस्मिताख्यो विपर्यासः क्लेशः ॥ ६ ॥

## भावागणेशवृत्तिः ।

**दृगिति** । दृग्द्रष्टा । दृश्यतेऽनयेति दर्शनं बुद्धिः । प्रलयादौ फलोपधानं नास्तीति शक्तिपदम् । दृक्शक्तेर्दर्शनशक्तेश्चैकात्मतेव धर्मतश्च रूपतश्चात्यन्तमेकाकारबुद्धिरस्मिता अहङ्कार इत्यर्थः । अवि-

---

(१) अविद्यामुक्त्वा तस्याः कार्यमस्मिता लक्षयातं दृगित्यादि । दृक् च दर्शनं च ते एव शक्ती तयोरात्मानात्मनोरनात्मन्यात्मज्ञानलक्षणा अविद्या आपादिता या एकात्मतेव न तु परमार्थत एकात्मता सा अस्मितेत्यर्थः । वास्तवकर्तृत्वभोक्तृत्वराहित्येपि कर्तृत्वाद्यभिमानः अस्मितेत्यर्थः ।

यातश्चास्मितायाः अयं भेदो यद्बुद्ध्यादौ सामान्यतोऽहंबुद्धिर्भेदाभेदसहिष्णुरुदेत्यत्यन्ताभेदाग्रहणात् सैवाविद्या । अस्मिता तु स्वतो धर्मतश्च तयोरखण्डत्वभ्रमरूपेति ॥ ६ ॥

## नागोजीभट्टवृत्तिः ।

अस्मितामाह—**दृक्दर्शनशक्त्योरेकात्मतेवास्मिता** । दृक् द्रष्टा पुरुषः, दृश्यतेऽनेनेति दर्शनं बुद्धिः प्रलयादौ फलोपधानाभावाच्छक्तिपदम् । अनयोरेकात्मतेव धर्मतः स्वरूपतश्चात्यन्तमेकाकारा बुद्धिरस्मिता अहंकार इत्यर्थः । अविद्या तु बुद्ध्यादौ सामान्यतो भेदाभेदसहिष्णुः, अत्यन्ताभेदाग्रहणात् । तिरस्कृतभेदा सैवास्मितेति बोध्यम् । वस्तुतः परिणामित्वादिधर्मैस्तयोर्भेद एव । अस्मितायां सत्यामेव भोगो भवति । तत्र भोग्यशक्तिबुद्धिरशुद्धाऽनुदासीना जडा च, भोक्तृशक्तिः पुरुषः सदा शुद्धः उदासीनश्चैतन्यरूपश्चेति ॥ ६ ॥

## मणिप्रभा ।

**दृगिति** । दृक्शक्तिः पुरुषः, दृश्यते इति दर्शनं तच्छक्तिः बुद्धिः, शक्तिशब्दो योग्यताऽर्थकः भोक्तृभोग्यत्वयोग्ययोरत्यन्तविविक्तयोर्दृग्दृश्ययोराविद्याकृतैकात्मता तादात्म्यम्, "इव"शब्देनाहमस्मीतिभ्रान्तिकृतत्वं तादात्म्यस्य द्योतयति । साऽस्मितेत्यर्थः । अयं हृदयग्रन्थिरित्युच्यते ब्रह्मवादिभिः ॥ ६ ॥

## चन्द्रिका ।

**दृगिति** । दृक्शक्तिः पुरुषो दर्शनशक्तिरन्तःकरणस्य सात्त्विकः परिणामस्तयोर्भोक्तृभोग्यत्वेन भिन्नत्वेऽपि एकताभिमानोऽस्मिता ॥ ६ ॥

## योगसुधाकरः ।

अविद्यामूलास्मितामाह—**दृगिति** ।

सत्त्वपुरुषयोरहमस्मीत्येकताभिमानोऽस्मितेत्यर्थः ॥ ६ ॥

## भोजवृत्तिः ।

रागस्य लक्षणमाह—

# सुखानुशयी रागः(१) ॥ ७ ॥

सुखमनुशेत इति सुखानुशयी, सुखज्ञस्य सुखानुस्मृतिपूर्वकं सुखसाधनेषु तृष्णारूपो गर्धो रागसञ्ज्ञकः क्लेशः ॥ ७ ॥

## भावागणेशवृत्तिः ।

**सुखेति** । सुखतत्साधनमात्रविषयकः क्लेशो राग इत्यर्थः । मात्रपदादविद्यादिव्यावृत्तिः । क्लेशपदाज्जीवन्मुक्तादीच्छाव्यावृत्तिः ॥ ७ ॥

## नागोजीभट्टवृत्तिः ।

तथास्मितापूर्वकत्वाद्रागादीनां तदनन्तरं तांल्लक्षयति—**सुखानुशयी रागः** । सुखे तत्साधने वा तत्त्वेन गृहीते तृष्णारूपः क्लेशो राग इत्यर्थः । क्लेशपदाच्च जीवन्मुक्तादीच्छाव्यावृत्तिः ॥ ७ ॥

## मणिप्रभा ।

अस्मितायाः कार्यं रागं निरूपयति—**सुखेति** ।

सुखानुभवे सति स्मृत्या तज्जातीयसुखान्तरे तत्साधने वा या तृष्णा स रागः सुखमनुशेते विषयीकरोतीति सुखानुशयीत्यर्थः ॥ ७ ॥

---

(१) सुखाभिज्ञस्य सुखस्मृतिपूर्वकः सुखतत्साधनविषयको यो गर्द्धः स राग इत्युच्यते । स्मर्यमाणे सुखे सुखस्मृतिपूर्वकः रागः अनुभूयमाने तु सुखे नानुस्मृतिमपेक्षते । तत्साधने तु सुखस्मृतिपूर्व एव रागः दृश्यमानमपि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा सुखसाधनजातीयतया अस्य सुखसाधनत्वमनुमाय इच्छतीति भावः ।

### चन्द्रिका ।

सुखेति । सुखमनुशेत इति सुखानुशयी रागः सुखसाधने गर्द्धः सोऽयं रागलक्षणः क्लेशः ॥७॥

### योगसुधाकरः ।

रागं निरूपयति—सुखेति ।

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकं सुखसाधनेषु तृष्णारूपो राग इत्यर्थः ॥ ७ ॥

### भोजवृत्तिः ।

द्वेषस्य लक्षणमाह—

## दुःखानुशयी द्वेषः(१) ॥ ८ ॥

दुःखमुक्तलक्षणं, तदभिज्ञस्य तदनुस्मृतिपूर्वकं तत्साधनेषु अनभिलषतो योऽयं निन्दात्मकः क्रोधः स द्वेषलक्षणः क्लेशः ॥ ८ ॥

### भावागणेशवृत्तिः ।

दुःखेति । सर्वं पूर्ववत् ॥ ८ ॥

### नागोजीभट्टवृत्तिः ।

दुःखानुशयी द्वेषः । दुःखे तत्साधने तत्त्वेन गृहीते यः क्रोधः स द्वेषः इत्यर्थः ॥ ८ ॥

### मणिप्रभा ।

दुःखेति । दुःखानुभवितुः स्मृत्या दुःखतत्साधनयोर्यः क्रोधः स द्वेष इत्यर्थः ॥ ८ ॥

### चन्द्रिका ।

दुःखेति । उक्तलक्षणदुःखाभिज्ञस्यानुस्मृतिपूर्वकं तत्साधनेष्वनभिलाषिता निन्दात्मको द्वेषलक्षणः क्लेशः ॥ ८ ॥

### योगसुधाकरः ।

दुःखेति । दुःखाभिज्ञस्य तदनुस्मृतिपुरःसरं तत्साधनेषु निन्दा द्वेष इत्यर्थः ॥ ८ ॥

### भोजवृत्तिः ।

अभिनिवेशस्य लक्षणमाह—

## स्वरसवाही विदुषोऽपि तथारूढो(२)ऽभिनिवेशः(३) ॥ ९ ॥

पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलाद्भयरूपः समुपजायमानः शरीरविषयादिभिः(४) मम वियोगो मा भूदिति अन्वहमनुबन्धरूपः सर्वस्यैवाऽऽकृमेर्ब्रह्मपर्यन्तं निमित्तमन्तरेण प्रवर्तमानोऽभिनिवेशाख्यः क्लेशः ॥ ९ ॥

### भावागणेशवृत्तिः ।

स्वरसेति । स्वस्य रसेन संस्कारेणैव वहतीति स्वरसवाही । अपिशब्दसमुच्चितमविद्वांसं तथेति तच्छब्दः परामृशति । रूढः प्रसिद्धः । तथाच यथाऽविदुषः तथा विदुषोऽपि स्वरसवाहित्वहेतुना यज्जातीयो यत्क्लेशो भयाख्यः प्रसिद्धोऽस्ति सोऽभिनिवेश इत्यर्थः । विदुषामपि मरणत्रासकृतं भयमस्तीति भाष्यकृतोक्तम् । पूर्वपूर्वजन्मसु मरणकाले यस्त्रासो जातो 'मा न भूवं भूयासम्' इत्युत्कण्ठारूपो

---

( १ ) दुःखज्ञानवतः दुःखस्मृतिपूर्वकः दुःखतत्साधनविषयको यो निन्दात्मको मन्युः स द्वेषः इति पूर्ववदेवार्थः ।

( २ ) तन्वनुबन्धोऽभिनिवेश इति पाठान्तरम् ।

( ३ ) तथारूढो ऽभिनिवेश इति भाष्यादिसम्मतः पाठः । तथारूढोऽन्वनुबन्धो ऽभिनिवेश इति पाठान्तरम् ।

( ४ ) शरीरविषयादेरिति पाठान्तरम् ।

भयनामा तज्जनितसंस्कारमात्रादविदुषामिवात्मविदामपि स जायते, न तत्राविद्यादिकं कारणमिति । एतज्जातीयं च भयसामान्यमभिनिवेशशब्देन परिभाषितमिति भावः ॥ ९ ॥

## नागोजीभट्टवृत्तिः ।

अभिनिवेशमाह—स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः । स्वस्य रसेन संस्कारेणैव वहतीति स्वरसवाही । अपिशब्दसमुचितस्तथाशब्दोऽविद्वांसं परामृशति । रूढः प्रसिद्धः । एवं च विद्वदविदुषोः स्वरसवाहित्वहेतुना यज्जातीयः क्लेशो भयाख्यः प्रसिद्धोऽस्ति सोऽभिनिवेशः इत्यर्थः । सर्वस्य चेयमिच्छा दृश्यते माभूवं मे मृतिर्जीव्यासमिति । स च जन्मान्तरेऽनुभूतमरणत्रासस्य तत्रासस्मरणजन्यभयेनाभिनिवेशाख्येन हि इयमिच्छा । स चायं दुःखजनकत्वात्क्लेशः यथा चायं जातमात्रस्य क्रिम्यादेस्तथा श्रुतानुमानाभ्यां ज्ञातसंसारकैवल्यतत्त्वस्य विदुषोऽपि मरणत्रासरूपोऽभिनिवेश इत्यर्थः । एतज्जातीयं च भयसामान्यमभिनिवेशशब्देनोच्यते । ननु पञ्चमी क्लेशावस्था दग्धबीजभावावस्था कुतो नोक्तेति चेन्न । पुरुषप्रयत्नसाध्यहानिका ह्युक्ता न चैषा तथा, चित्तलये तेनैव सह तासां नाशात् । 'ते प्रतिप्रसवहेयाः सूक्ष्मा' इति तु भाष्यमेव न सूत्रमिति वाचस्पतिस्वरसः । प्रतिप्रसवश्चित्तलयः ॥ ९ ॥ १० ॥

## मणिप्रभा ।

विदुषो मूर्खस्य वा जन्तुमात्रस्य यो मरणत्रासः सोऽभिनिवेशः । यथा मूर्खस्याहं सदा स्यामिति रूढत्रासः तथा विदुषोऽपि रूढो दृश्यते । यतः स्वरसवाही सः, पूर्वजन्मस्वसकृन्मरणदुःखानुभवजन्यवासनासङ्घः स्वरसः । तेन वहति प्रवहतीति स्वरसवाही । अनेन भयेन देहातिरिक्तात्मा भाष्ये प्रसङ्गाद्दर्शितः । दृश्यते हि जातमात्रस्य बालस्य मरणाद्भयं तच्च पूर्वमरणस्मरणं विनाऽनुपपन्नमिति । एते चाविद्याऽऽदयः पञ्च क्रमेण तमो मोहो महामोहः तामिस्रः अन्धतामिस्र, इत्युच्यन्ते । तत्राऽव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मबुद्धिरविद्या तमः, अणिमाद्यष्टैश्वर्येषु अणुरस्मि महानस्मीति तादात्म्यं मोहः, तेन दिव्यादिव्यभेदेन शब्दादिदशविषयेषु रागो महामोहः, कुतश्चिदैश्वर्यविघाते तन्निमित्तकदशविषयभोगालाभे सत्यष्टादशेष्टविघातके द्वेषस्तामिस्रः, एतेषामेवाष्टादशानामिष्टानां नाशाद्भयमन्धतामिस्र इति । तथा च सांख्यकारिका—

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः । इति ॥ ९ ॥

## चन्द्रिका ।

स्वरसेति । पूर्वजन्मानुभूतवासनाबलाज्जायमानो मरणदुःखानुभवः शरीरादिभिर्मम वियोगो माभूदिति(१) सर्वेषामभिनिवेशः ॥ ९ ॥

## योगसुधाकरः ।

स्वरसतः प्रवाहशीलो विदुषोऽपि तथा मूढवदारूढो भयत्रासोऽभिनिवेशः । पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात्सर्वस्य प्राणभृन्मात्रस्य आ क्रिमेरा च विदुषः संजायमानः शरीरविषयादेर्मम वियोगो मा भूदिति प्रत्यहं निमित्तमन्तरेण प्रवर्तमानो भयरूपोऽभिनिवेश इति ॥ ९॥

## भोजवृत्तिः ।

तदेवं व्युत्थानस्य क्लेशात्मकत्वादेकाग्रताभ्यासकामेन प्रथमं क्लेशाः परिहर्तव्याः । न चाज्ञातानां तेषां परिहारः कर्तुं शक्य इति तज्ज्ञानाय तेषामुपदेशं(२ क्षेत्रं विभागं लक्षणं चाभिधाय स्थूलसूक्ष्मभेद-

---

(१) शरीरादिभिर्मम वियोगो मा भूत्‌ मा न भुवं भूयासमिति इयमात्माशीः आकृमेः सर्वस्यैव भवति न खल्वननुभूतमरणधर्मकस्येयं भवति एतया च पूर्वजन्मानुभवोऽनुमीयते स चाशीरूपः अभिनिवेशाख्यः क्लेशः ।

(२) मुद्देशमिति पाठान्तरम् ।

भिन्नानां तेषां प्रहाणोपायविभागमाह—

**(१) ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥**

ते सूक्ष्माः क्लेशा ये वासनारूपेणैव स्थिता न वृत्तिरूपं परिणाममारभन्ते, ते प्रतिप्रसवेन प्रतिलोमपरिणामेन हेयास्त्यक्तव्याः । स्वकारणास्मितायां कृतार्थं सवासनं चित्तं यदा प्रविष्टं भवति तदा कुतस्तेषां निर्मूलानां सम्भवः ॥ १० ॥

**भावागणेशवृत्तिः ।**

क्रियायोगः क्लेशतनूकरणार्थ इत्युक्तम् । तत्र क्लेशा व्याख्याताः । इदानीं तनूकरणस्य फलमाह—त इति ।

क्लेशानामेव संसारनिदानत्वं प्रपञ्चयिष्यते । अतस्ते क्लेशा अनागतावस्था वक्ष्यमाणज्ञानाग्निना दग्धबीजवत्कार्याक्षमीकृताः प्रतिप्रसवेन चित्तस्य प्रलयेनात्यन्तिकेन हेया धर्मिनाशेनोच्छेद्या इत्यर्थः । ननु दग्धबीजकल्पस्यानर्थहेतुत्वासम्भवात्तन्नाशो न पुरुषार्थ इति चेत् । तथाप्यस्य सूत्रस्य [न]स्वरूपाख्यानमात्रत्वं सम्भवति । वस्तुतस्तु क्लेशत्वावच्छेदेनैव दुःखनिदानतया क्लेशसामान्याभावत्वेनैव पुरुषार्थतेति॥१०॥

**मणिप्रभा ।**

ते च पञ्च क्लेशा द्विविधाः । पुरुषख्यात्या दग्धाः संस्काररूपाः सूक्ष्माः, क्रियायोगेन मैत्र्यादिभावनारूपपरिकर्मणा च तनूकृताः स्थूला इति । तत्र सूक्ष्माणां हानोपायमाह—ते इति ।

चित्तस्य कृतकृत्यस्यास्मितायां स्वप्रकृतौ प्रलयः प्रतिप्रसवः तेन हेयाः सूक्ष्माः ते क्लेशाः । धर्मिनाशादेव तद्धर्माणां संस्काराणां नाश इत्यर्थः ॥ १० ॥

**चन्द्रिका ।**

त इति । ते सूक्ष्माः क्लेशाः प्रतिलोमपरिणामेन हेयास्त्यक्तव्याः ॥ १० ॥

**योगसुधाकरः ।**

पूर्वं कर्मयोगमभिधाय तेन विरलाः क्लेशास्तत्समनन्तरभाविपुरुषख्यात्या दग्धा भवन्तीत्यर्थादभिहितम् । तत्र सूक्ष्माणां दग्धानामधुना समूलोन्मूलनोपायमाह—त इति ।

चित्तस्य निवृत्ताधिकारस्य प्रकृतौ प्रलयः प्रतिप्रसवः । तेन हेयाः सूक्ष्माः क्लेशाः । स्वमूलभूतचित्तहानौ तत्संस्काररूपाः सूक्ष्माः समूलघातं हता भवन्तीत्यर्थः ॥ १० ॥

**भोजवृत्तिः ।**

स्थूलानां हानोपायमाह—

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

तेषां क्लेशानामारब्धकार्याणां याः सुखदुःखमोहात्मिका वृत्तयस्ता ध्यानेनैव चित्तैकाग्रतालक्षणेन हेया हातव्या इत्यर्थः । चित्तपरिकर्माभ्यासमात्रेणैव स्थूलत्वात्तासां निवृत्तिर्भवति-यथा वस्त्रादौ स्थूलो मलः प्रक्षालनमात्रेणैव निवर्तते, यस्तु तत्र सूक्ष्मः स तैस्तैरुपायैरुत्तापनप्रभृतिभिरेव निवर्तयितुं शक्यते ११

**भावागणेशवृत्तिः ।**

ननु भवत्वेवं, तनूकरणस्य तु किं फलमित्याकाङ्क्षायामाह—ध्यानेति ।

तेषां क्लेशानां या वृत्तयः स्थूला अभिव्यक्तावस्थास्ताः प्रथमं क्रियायोगेन तनूकृताः सत्यः ध्यानेनात्मसाक्षात्काररूपप्रवाहरूपेण हातव्याः प्रतिबद्धोत्पत्तिकाः कर्तव्या इति यावत्। अभिव्यक्तिप्रतिबन्धतः

---

(१) अज्ञातानां क्लेशानां प्रहाणासम्भवात् तज्ज्ञानाय तेषामुद्देशं क्षेत्रं विभागं लक्षणं चाभिधाय स्थूलसूक्ष्मभेदभिन्नानां तेषां हानोपायमाह ते इति द्वाभ्याम् । सूक्ष्मा इति । वासनारूपेण स्थिताः न वृत्तिरूपं परिणाममारभन्त इत्यर्थः । तथा च स्वकारणे चित्तं यदा प्रविशति तदा कुतस्तेषां निर्मूलानां सम्भव इति प्रथमस्य द्वितीयस्य तु तेषां आरब्धकार्याणां क्लेशानां याः सुखदुःखमोहात्मिकाः वृत्तयस्ते ध्यानेन हेयाः । चित्तपरिकर्माभ्यासमात्रेण स्थूलत्वात्तासां निवृत्तिरिति तात्पर्यार्थः ।

क्लेशवासनानुत्पत्त्या प्राचीनवासनानां च क्षयात्ता एवानागतावस्थाः क्लेशाः दग्धबीजतुल्या भवन्तीत्यर्थः। क्लेशानां बीजशक्तिदाहश्च वासनाख्यसहकार्युच्छेदनं यथा धान्यादौ बीजशक्तिदाहो रसाख्यसहकार्युच्छेदनमिति । तथा च क्रियायोगात्क्लेशानां तनूकरणं विवेकाभ्यासप्रतिबन्धाक्षमत्वं भवति । ततश्च निर्विघ्नविवेकख्यातिप्रवाहनिष्पत्त्या निःशेषतोऽविद्यावासनोच्छेदो भवति । ततश्च दग्धबीजकल्पा अनागतावस्थाः क्लेशाश्चित्तेन सह लीयन्ते इति सिद्धम् ॥ ११ ॥

## नागोजीभट्टवृत्तिः।

तनूकृतानां हानोपायमाह सूत्रकृत्—**ध्यानहेयास्तद्वृत्तयः** । तेषां क्लेशानां या वृत्तयः स्थूला अभिव्यक्तावस्थास्ताः प्रथमं क्रियायोगेन तनूकृतास्ता ध्यानेनात्मसाक्षात्कारप्रवाहेण हातव्याः प्रतिबद्धोत्पत्तिकाः दग्धबीजकल्पाः कार्याः । अभिव्यक्तिरूपोत्पत्तिप्रतिबन्धाच्चाग्रे न वासनोत्पत्तिः । क्लेशानां बीजशक्तिदाहश्च वासनाख्यसहकार्युच्छेदनम् । यथा धान्यादौ बीजशक्तिदाहो रसाख्यसहकार्युच्छेदनम् । एवं च क्रियायोगात् क्लेशानां तनूकरणं विवेकाभ्यासप्रतिबन्धाक्षमत्वम् । ततो निर्विघ्नविवेकख्यातिप्रवाहनिष्पत्त्या निःशेषतोऽविद्यावासनोच्छेदे दग्धबीजकल्पा अनागतावस्थाः क्लेशाश्चित्तेन सह लीयन्त इति सिद्धम् ॥ ११ ॥

## मणिप्रभा ।

स्थूलानां हानोपायमाह—**ध्यानेति** ।

याः क्रियायोगेन विरलाः क्लेशवृत्तयः स्थूलाः सुखदुःखमोहात्मिकाः, ताः पुरुषध्यानेनैव हातव्या इत्यर्थः । यथा लोके वस्त्रस्यातिस्थूलो मलः प्रक्षालनेनैवादौ शोध्यते, पश्चाद्विरलः क्षारसंयोगादिना, मलवासना तु वस्त्रनाशेनैव नश्यति । तथा क्रियायोगेनातिनिबिडाः क्लेशा विरला भवन्ति, विरलास्तु ध्यानेन तनूकृताः, सूक्ष्मास्तु चित्तनाशेन नश्यन्तीति भावः ॥ ११ ॥

## चन्द्रिका ।

**ध्यानेति** । तेषां वृत्तयः सुखाद्यास्ता ध्यानेन चित्तैकाग्र्येण हेयाः ॥ ११ ॥

## योगसुधाकरः ।

अथ स्थूलानां समूलं कषणोपायमाह—**ध्यानेति** ।

क्रियायोगेण शिथिलाः स्थूलास्ताः क्लेशवृत्तयः पुरुषध्यानेनैव हातव्याः । हीनाश्च स्वमूलचित्तोन्मूलनेनोन्मूलिता भवन्तीत्युक्तम् ॥ ११ ॥

## भोजवृत्तिः ।

एवं क्लेशानां तत्त्वमभिधाय कर्माशयस्य तदभिधातुम्(१)आह—

### (२)क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥

कर्माशय इत्यनेन तस्य स्वरूपमभिहितम् । यतो वासनारूपाण्येव कर्माणि । क्लेशमूल इत्यनेन कारणमभिहितम् । यतः कर्मणां शुभाशुभानां क्लेशा एव निमित्तम् । दृष्टादृष्टजन्मवेदनीय इत्यनेन फलमुक्तम् । अस्मिन्नेव जन्मनि अनुभवनीयः दृष्टजन्मवेदनीयः। जन्मान्तरानुभवनीयोऽदृष्टजन्मवेदनीयः। तथा

---

( १ ) कर्माशयस्याभिधातुमिति पाठान्तरम् ।

( २ ) ननु जात्यायुर्भोगहेतवः क्लिश्नन्तः क्लेशाः कर्म्माशय एव तथा भवितुमर्हति न त्वविद्यादयस्तथा तत्कथमुक्तमविद्यादयः क्लेशा इतीमां शङ्कां कर्म्माशयस्वरूपकारणफलप्रतिपादनपूर्वकं परिहरति क्लेशमूल इति । कर्म्माशय इत्यनेन स्वरूपमुक्तं कर्म्मणां वासनात्मकत्वात् । क्लेशमूल इत्यनेन कारणमुक्तं क्लेशो मूलं यस्य स तथा । दृष्टदृष्टेत्यनेन फलमुक्तम् । तथा च आविद्यामूलः कर्म्माशयः जात्यादिहेतुः अतः अविद्यादयोऽपि तद्धेतवस्तस्मात्ते क्लेशा इति भावः । एवं च क्रियायोगेन क्लेशतनूकरणे कर्म्माशयो न जन्यते ततश्च जात्यायुर्भोगानामभावः कारणाभावादिति तात्पर्यम् ।

हि-कानिचित्पुण्यानि कर्माणि देवताराधनादीनि तीव्रसंवेगेन कृतानीहैव जन्मनि जात्यायुर्भोगलक्षणं फलं प्रयच्छन्ति-यथा नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः प्रादुर्भूताः। एवमन्येषां विश्वामित्रादीनां तपःप्रभावाज्जात्यायुषी । केषांचिज्जातिरेव—यथा तीव्रसंवेगेन दुष्टकर्मकृतां नहुषादीनां जात्यन्तरादिपरिणामः । ऊर्वश्याश्च कार्तिकेयवने लतारूपतया । एवं व्यस्तसमस्तरूपत्वेन यथायोगं योज्यम् ॥ १२ ॥

## भावागणेशवृत्तिः ।

इदानीं क्लेशाः किमर्थं हेया इत्याकाङ्क्षायां येन द्वारेण दुःखनिदानत्वं तद्द्वारमाह—क्लेशेति ।

दृष्टादृष्टजन्मनी वर्तमानभाविष्यती । वेदनं भोगः । कर्माशयो धर्माधर्मौ । तथाच दृष्टादृष्टजन्मभोग्यो धर्माधर्मप्रचयः क्लेशमूलकस्तत्कार्यमित्यर्थः,

रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ।
कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतेः ॥
तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः ।

इति कौर्मादिभ्य इति भावः ॥ १२ ॥

## नागोजीभट्टवृत्तिः ।

अथ क्लेशानां दुःखनिदानत्वे द्वारमाह—क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः । दृष्टादृष्टजन्मनी वर्तमानभविष्यती, वेदनं भोगः, कर्माशयो धर्माधर्मौ । एवं च वर्तमानभाविजन्मभोग्यो धर्माधर्मप्रचयः क्लेशमूलः क्लेशकार्यमित्यर्थः ।

रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ।
कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतेः ।
तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः ॥ इति कौर्मात् ॥

तत्रोत्कटौ धर्माधर्मौ च वर्तमानजन्मभोग्यौ ॥ १२ ॥

## मणिप्रभा ।

क्लेशान्निरूप्य, ननु कथं तेषां क्लेशत्वमित्याशङ्क्य कर्मतत्फलमूलत्वेन बन्धकत्वात्तेषां क्लेशत्वमित्याह--क्लेशेति । अत्र त्रिभिः पदैः क्रमेण कर्मणां हेतुस्वरूपकार्य्याण्युच्यन्ते ।

आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः कर्मणां धर्माधर्मरूपः संस्कारः । क्लेशाः कामक्रोधादयो मूलमस्येति क्लेशमूलः । स च द्विविधः—दृष्टजन्मवेदनीयः, अदृष्टजन्मवेदनीयश्चेति । यन देहेन कर्म कृतं तद् दृष्टं जन्म, तेनैव देहेन भोक्तव्य आद्यः । यथा नन्दीश्वरो बाल एव मनुष्यदेहेन तीव्रसंवेगेन मन्त्रतपःसमाधिभिः ईश्वराराधनं कृत्वा सद्य एव देवत्वजातिं, दीर्घमायुः, दिव्यभोगांश्च लब्धवान् । तथा विश्वामित्रो जात्यायुषी लब्धवान् । तथा भीतव्याधितकृपणविश्वस्तमहाऽनुभावेषु कृतोऽपराधः सद्य एव पच्यते । यथा नहुषस्य महर्ष्यपराधेन सद्यः सर्पत्वमभवत् । द्वितीयस्तु जन्मान्तरभोग्यस्वर्गनरकादिहेतुः कर्माशय इत्यर्थः ॥ १२ ॥

## चन्द्रिका ।

क्लेशेति । अविद्यादिक्लेशमूला वासना अस्मिन् जन्मनि अनुभवनीया जन्मान्तरे वा ॥ १२ ॥

## योगसुधाकरः ।

इत्थं क्लेशांस्तद्धानोपायं च अभिधाय अधुना कर्माशयस्य क्लेशनिदानत्वमुपदर्शयन्नाह–क्लेशेति ।

रागद्वेषादिक्लेशनिदानः कर्मणां धर्माधर्मरूपः संस्कारः कर्माशयः । स च दृष्टजन्मवेदनीय इहैवानुभाव्यः, अदृष्टजन्मवेदनीयश्चामुत्रानुभाव्यः । तत्राद्यो यथा नन्दिकेश्वरस्तीव्रतपश्चर्यादिसाधनैरीश्वरं समाराध्य सद्य एव देवत्वादिकमलभत, नहुषो महर्ष्यपराधेन सद्यः सर्पत्वमगमत् । द्वितीयस्तु स्वर्गनरकादिहेतुरित्यर्थः ॥ १२॥

### भोजवृत्तिः।

इदानीं कर्माशयस्य स्वभेदभिन्नस्य (१) फलमाह—

## (२)सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

मूलमुक्तलक्षणाः क्लेशाः, तेष्वनभिभूतेषु सत्सु कर्मणां कुशलाकुशलरूपाणां विपाकः फलं जात्यायुर्भोगा भवन्ति। जातिर्मनुष्यत्वादिः। आयुश्चिरकालमेकशरीरसंबन्धः। भोगा विषया इन्द्रियाणि सुखसंविद्दुःखसंविच्च, कर्मकरणभावसाधनव्युत्पत्त्या भोगशब्दस्य। इदमत्र तात्पर्यम्· चित्तभूमावनादिकालसंचिताः कर्मवासना यथा यथा पाकमुपयान्ति तथा तथा गुणप्रधानभावेन स्थिता जात्यायुर्भोगलक्षणं स्वकार्यमारभन्ते ॥ १३ ॥

### भावागणेशवृत्तिः।

न केवलं कर्माशयेष्वेव क्लेशाः कारणमपि तु तत्फलेष्वपीत्याह—सतीति।

धर्माधर्ममूले क्लेशे सत्येव धर्माधर्मयोर्विपाकः फलं जात्यायुर्भोगरूप भवति। तत्र जातिर्जन्म, आयुर्जीवनकालः, भोगश्चात्र सुखदुःखमोहात्मकशब्दादिवृत्तिरित्यर्थः। अत्र विपाको विपाकारम्भः, भाष्यकारैर्व्याख्यातत्वात्। अतो निःशेषाऽविद्याक्षयेऽपि जीवन्मुक्तानां प्रारब्धभोग उपपद्यते। अत्र प्रमाणं च वार्तिके द्रष्टव्यम् ॥ १३ ॥

### नागोजीभट्टवृत्तिः।

अथ क्लेशकारणकमेव तत्फलमाह—सति मूले तद्विपाको जात्यायुर्भोगाः। धर्माधर्ममूल क्लेशे सत्येव तयोर्विपाकः फलं जात्यायुर्भोगरूपं भवति। तत्र जातिर्जन्म, आयुर्जीवनकालः, भोगः सुखदुःखमोहात्मकशब्दादिवृत्तिः। अत्र भोगो मुख्यं फलम्। तन्नान्तरीयके च जन्मायुषी। क्लेशस्य सत्ता च प्रसंख्यानदग्धबीजभावेनैव। अत्र विपाको विपाकारम्भः। अतो निःशेषाविद्याक्षयेऽपि जीवन्मुक्तानां प्रारब्धभोग उपपद्यते। अत्रेदं बोध्यम्। एककर्म नैकस्य जन्मनः कारणम्, एकस्मिन्नपि जन्मनि विचित्रविचित्रसुखन्मदुःखानुभवात्। अनादिकालानेकजन्मार्जितासंख्येयकर्मणां मध्ये एकजन्मोपभुक्तैकैककर्मणोऽवशिष्टकर्मणां फलदाने विनिगमनाविरहाच्च। सत्प्रतिपक्षन्यायेन सर्वेषां फलदानप्रतिबन्धे कर्मानुष्ठानेऽनाश्वासापत्तेश्च। नाप्येकमनेकस्य। एकस्यैवानेकजन्मनिमित्तत्वेऽन्येषां विपाककालाभावेन तद्वैफल्ये तदननुष्ठानापत्तेः। उक्तदोषाच्च। नाप्यनेकं कर्मानेकजन्मकारणम्। अयोगिनामनेकजन्मनां युगपदसम्भवेन क्रमेणैव वाच्यतया तत्तज्जन्मसु क्रियमाणकर्मणां विपाककालाभावेन तत्र तत्र कर्माननुष्ठानापत्तेः। तस्माज्जन्ममरणान्तरे कृतकर्मसमूहो विचित्रफलद उद्भूतत्वादिभिः क्रमेण फलदो मरणेन कार्यारम्भाभिमुख्यं नीतः युगपदेकलोलीभावापन्न एकं जन्म करोति, तेनैव कर्मणा तत्र लब्धायुष्को भोगवांश्चेति स त्रिविपाकः, एवमेषः अदृष्टजन्मवेदनीयः कर्माशयः। एकजन्मावच्छिन्नक्लेशकर्मविपाकानुभवजाः स्मृतिहेतुसंस्काररूपा वासनास्तु अनादयोऽनेकजन्मपूर्विकाः। अत एव मनुष्यस्तिर्यग्योनिमापन्नस्तज्जातीयोचितभोजने प्रवर्तते। स कर्माशयो द्विविधः। आरब्धफलोऽनारब्धफलश्च। तत्रारब्धफल उक्त एकजन्मावच्छिन्नः। अनारब्धफलोऽपि त्रिविधः शुक्लः कृष्णः शुक्लकृष्णश्च। परपीडारहिततपःस्वाध्यायादिः आद्यः स उदित एवान्ययोर्द्वयोर्नाशक इति तस्यैका गतिरनारब्धफल-

---

(१) स्वभेदाभिन्नामिति पाठान्तरम्।

(२) माभूत् कर्म्माशयान्तरं नाम प्राक्तनानां कर्म्माशयानामनादिभवपरम्परासञ्चितानामनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वात् संसारोच्छेदोऽशक्य इत्यत आह सतीति। अयमाशयः। सुखदुःखफलः कर्म्माशयः तदर्थं जन्मायुषी नान्तरीयकतया प्रसूते। सुखदुःखे च रागद्वेषानुषक्ते रागाद्यभावे न भवतः। यः सुखादौ न तुष्यति नं वा उद्विजते तत्र सुखं दुःखं वा दुःखं वा न भवन्ति; क्लेशसलिलावसिक्ता चित्तभूमिः कर्म्मफलप्रसवक्षेत्रं क्लेशानां फलदानसमये कर्म्माशयसहकारित्वेनेति सहकारिवैकल्यात् प्रसंख्यानदग्धबीजभावकल्पाः न फलाय कल्पत इति।

स्य । किंचित्तु कृष्णं कर्म यज्ञान्तर्गतपशुहिंसादिजन्यं पापम् । अनारब्धफलमपि प्रधानकर्मविपाकेन सहात्मफलदम् । एतदेव प्रधानकर्मण्यावापगमनम्। एतदन्तर्गतपशुहिंसादि च प्रधानाङ्गत्वेन विधानात् तदुपकारकं, न हिंस्यादिति निषेधात्पापजनकं च ॥ एतदेव यज्ञादि कृष्णशुक्लम् । किञ्चित्त्वनारब्धफलमारब्धविपाककर्मणाऽभिभूतं चिरमवतिष्ठते यावत्तदाभिव्यञ्जककालागमनम् । दृष्टजन्मवेदनीयस्तु एकविपाकारम्भी भोगहेतुत्वात् । द्विविपाकारम्भी वा भोगायुर्हेतुत्वात् । एवं कर्मगतिश्चित्रा दुर्विज्ञाना चेति भाष्ये स्पष्टम् ॥ १३ ॥

## मणिप्रभा ।

अयं क्षीणक्लेशानां नास्तीति विशेषमाह—**सतीति** ।

क्लेशरूपे मूले सत्येव कर्मणो विपाकः फलं भवति । न ह्यक्लेशो भुङ्क्ते, न ह्यकामस्य क्वचिदपि कर्मजे फले सुखबुद्धिरस्ति, न ह्यनुद्वेगः शोचति । अतो विवेकख्यात्यग्निदग्धेषु क्लेशेषु कर्मबीजं वितुषव्रीह्यादिवत न फलं प्रसूते । स विपाकस्त्रिविधः। जातिर्जन्म देवत्वादिर्वा, आयुश्चिरकालं देहप्राणयोर्योगः, इन्द्रियैर्विषयानुभवो भोग, इति । तत्र भोगो मुख्यः, जात्यायुषी तच्छेष, इति विभागः । तत्रैकस्मिन् देहे विचित्रभोगदर्शनादनेकानि कर्माणि मरणकालाभिव्यक्तानि एकं जन्मारभन्त इत्येकभाविकः कर्माशय उच्यते । तस्य क्वचिज्जातिः, क्वचिदायुः, क्वचिद्भोगः, क्वचिद् द्वयं, क्वचित्त्रय मिति फलवैचित्र्यं ज्ञेयम् । तदुक्तं भगवता "गहना कर्मणो गति" रिति । विस्तरस्तु भाष्ये द्रष्टव्यः ॥ १३ ॥

## चन्द्रिका ।

**सतीति** । अविद्यादौ सति, कर्मणो विपाकः फलं, जात्यायुर्भोगाः-ब्राह्मणत्वादिर्जातिः, चिरकालं कायसम्बन्ध आयुः, भोगा विषयाः ॥ १३ ॥

## योगसुधाकरः ।

न केवलं क्लेशमूलत्वं कर्माशयस्यैव, किन्तु तद्विपाकस्यापीत्याह—**सतीति** ।

क्लेशरूपे मूले सत्येव कर्मणो विपाकः फलम् । स च त्रिविधः—जातिर्जन्म देवत्वादिर्वा । आयुश्चिरकालं देहप्राणयोगः । इन्द्रियैर्विषयानुभवो भोग-इति । तत्र भोगो मुख्यः, जात्यायुषी तच्छेषभूते इति विभागः । सूत्रद्वयस्यायमभिसंध्यर्थः—सत्सु क्लेशेषु कर्मतत्फले भवतः; विवेकख्यात्याग्निदग्धेषु कर्मालब्धात्मकं सद्वितुषशाल्यादिवन्न फलं प्रसूत इति ॥ १३ ॥

## भोजवृत्तिः ।

उक्तानां कर्मफलत्वेन जात्यादीनां स्वकारणकर्मानुसारिणां(१) कार्यकर्तृत्वमाह—

### (२)ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥

ह्लादः सुखः, परितापो दुःखं, ह्लादपरितापौ फलं येषां ते तथोक्ताः । पुण्यं कुशलं कर्म, तद्विपरीतमपुण्यं, ते पुण्यापुण्ये कारणं(३) येषां ते तेषां भावस्तस्मात् । एतदुक्तं भवति-पुण्यकर्मारब्धा जात्यायुर्भोगा ह्लादफला अपुण्यकर्मारब्धास्तु परितापफलाः । एतच्च प्राणिमात्रापेक्षया द्वैविध्यम् ॥ १४ ॥

## भावागणेशवृत्तिः ।

उक्ताभ्यां कर्मतद्विपाकाभ्यां द्वाराभ्यां क्लेशानां मुख्यं फलमनर्थमाह—**ते इति** ।

ते विपाकाः सर्व एव समुच्चितसुखदुःखफलकाः समुच्चितपुण्यापुण्यहेतुत्वादित्यर्थः । सुखदुःखयोश्च फलं पुरुषस्य भोग इति प्रसिद्धत्वान्नोक्तम् । तदित्थमनर्थहेतुत्वात्क्लेशास्तनूकरणादिक्रमेण हेया इति प्रघट्टकार्थः ॥ १४ ॥

---

(१) कर्मानुसारेणेति पाठान्तरम् ।

(२) पूर्वसूत्रे जात्यादीनां कर्म्मफलत्वमुक्त्वा सम्प्रति स्वस्वकारणकर्म्मानुसारेण जात्यादीनां कार्यकर्त्तृत्वमाह त इति । (३) कारणमिति पाठान्तरम् ।

### नागोजीभट्टवृत्तिः ।

अथैतेषां सर्वेषां त्याज्यतामूलं विपाकानां फलमाह—ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् । ते जन्मायुर्भोगाः समुच्चितपुण्यापुण्यहेतुकत्वात्समुच्चितसुखदुःखफलका इत्यर्थः । एवं पुण्यहेतुकाः सुखफला अपुण्यहेतुकाश्च दुःखफला इति । ननु सुखदुःखानन्तरभावी तदनुभवात्मा भोग इति कथं भोगफलत्वमेतयोरिति चेन्न । भोगविषयतामात्रेण तत्फलत्वात् । यद्वा कर्मकरणव्युत्पत्त्या भोगशब्देन विषया इन्द्रियाण्येव तत्र, अत्र च सुखदुःखशब्दौ तद्भोगपरौ । तदित्थमनर्थहेतुत्वात्क्लेशाः तनूकरणादिक्रमेण हेया इति प्रघट्टकार्थः ॥ १४ ॥

### मणिप्रभा ।

अधुना जात्यादीनां हेयत्वार्थं फलमाह—ते ह्लादेति ।

ते जन्मायुर्भोगाः । पुण्यहेतुकाः सुखफलाः । अपुण्यं पापं तद्धेतुका दुःखफलाः । अत्र भोगो विषयानुभवः । मिश्रास्तु—सुखदुःखानुभवो भोगः तस्य कर्मतया साध्यत्वेन सुखदुःखे फले गमनस्येव ग्राम-इत्याहुः ॥ १४ ॥

### चन्द्रिका ।

तइति । ते पूर्वोक्ताः पुण्यापुण्यहेतुत्वात् ह्लादपरितापौ सुखदुःखे तत्फलौ भवन्ति । एतच्च सर्वसाधारणम् ॥ १४ ॥

### योगसुधाकरः ।

अधुना जात्यादीनां हेयत्वार्थं फलमाह—ते इति ।

ते जात्यायुर्भोगाः पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका दुःखफला भवन्ति विभागेनाविवेकिनामित्यर्थः ॥ १४ ॥

### भोजवृत्तिः ।

योगिनस्तु सर्वं दुःखमित्याह—

**परिणामतापसंस्कारदुःखैर्गुणवृत्ति(त्य)विरोधाच्च(१)दुःखमेव सर्वं विवेकिनः ॥ १५ ॥**

विवेकिनः परिज्ञातक्लेशादिविवेकस्य परिदृश्यमानं सकलमेव भोगसाधनं सविषं स्वाद्वन्नमिव दुःखमेव प्रतिकूलवेदनीयमेवेत्यर्थः । यस्मादत्यन्ताभिजातो योगी दुःखलेशेनाप्युद्विजते -यथाऽक्षिपात्रमूर्णातन्तुस्पर्श(२)मात्रेणैव महतीं पीडामनुभवति नेतरदङ्गं, तथा विवेकी स्वल्पदुःखानुबन्धेनापि उद्विजते । कथमित्याह—परिणामतापसंस्कारदुःखैः । विषयाणामुपभुज्यमानानां यथायथं गर्धाभिवृद्धेस्तदप्राप्तिकृतस्य दुःखस्यापरिहार्यतया दुःखान्तरसाधनत्वाच्चास्त्येव दुःखरूपतेति परिणामदुःखत्वम् । उपभुज्यमानेषु सुखसाधनेषु तत्प्रतिपन्थिनं प्रति द्वेषस्य सर्वदैवावस्थितत्वात्सुखानुभवकालेऽपि तापदुःखं दुष्परिहरमिति तापदुःखता । संस्कारदुःखत्वं च स्वाभिमतानाभिमतविषयसंनिधाने सुखसंविद्दुःखसंविच्चोप-

---

(१) परिणामतापसंस्कारदुःखैरिति । उपभुज्यमानानां विषयाणां यथायथं तृष्णावृद्धेस्तदप्राप्तिजस्य दुःखस्यापरिहार्य्यतया दुःखान्तरकारणतया च दुःखरूपतेति परिणामदुःखत्वम् । उपभुज्यमानेषु सुखसाधनेषु तत्प्रतिपन्थिनं प्रति द्वेषस्य सर्वदैव अवस्थितत्वात् सुखानुभवकालेऽपि दुःखं दुष्परिहरमिति तापदुःखत्वम् । स्वाभिमतानभिमतविषतसान्निध्येऽपि सुखसम्विद्दुःखसंविच्चोपजायमाना तथाविधमेव संस्कारमारभते संस्काराच्च तथाविधः संविदनुभवः इत्यपरिमितसंस्कारोत्पत्तिद्वारेण संस्कारानुच्छेदात् संस्कारदुःखत्वम् । गुणवृत्तिविरोधादिति । गुणानां सत्त्वरजस्तमसां या वृत्तयः सुखदुःखमोहात्मिकाः परस्पराभिभाव्याभिभावकत्वेन विरुद्धा जायन्ते तासां च सर्वत्रैव दुःखानुवेधात् दुःखत्वमिति भावः ॥

(२) मूर्णातन्तुस्पर्शेति पाठान्तरम् ।

जायमाना तथाविधमेव स्वक्षेत्रे संस्कारमारभते, संस्काराश्च पुनस्तथाविधसंविदनुभव इत्यपरिमितसंस्कारोत्पत्तिद्वारेण संसारानुच्छेदात्सर्वस्यैव दुःखत्वम् । गुणवृत्तिविरोधाच्चेति । गुणानां सत्त्वरजस्तमसां या वृत्तयः सुखदुःखमोहरूपाः परस्परमभिभाव्याभिभावकत्वेन विरुद्धा जायन्ते तासां सर्वत्रैव दुःखानुबन्धाद्दुःखत्वम् । एतदुक्तं भवति—ऐकान्तिकीमात्यन्तिकीं च दुःखनिवृत्तिमिच्छतो विवेकिन उक्तरूपकारणचतुष्टयं यावत्सर्वे(१) विषया दुःखरूपतया प्रतिभान्ति तावत्(२) सर्वकर्मविपाको दुःखरूप एवेत्युक्तं भवति ॥ १९ ॥

## भावागणेशवृत्तिः ।

नन्वेवं यथा दुःखनिदानत्वेन क्लेशा हेयास्तथा सुखनिदानत्वेनोपादेया अपि स्युस्तत्राह—**परिणामेति** ।

परिणामश्च तापश्च संस्कारश्च तज्जन्यानि दुःखानि । तैः सम्बन्धात्तत्कारणत्वादिति यावत् । तथा गुणानां सत्त्वरजस्तमसां या वृत्तयः सुखदुःखमोहास्तासामेककालानवस्थानरूपविरोधाभावाच्च सर्वं प्रकृतितत्कार्यसुखादिकं विवेकिनः सुखदुःखतत्त्वसाक्षात्कारिणो दुःखमेव मतम्, दुःखकारणत्वदुःखसंभिन्नत्वाभ्यामित्यर्थः । तथाच सुखरागापेक्षया दुःखद्वेषस्य बलवत्त्वात्सुखापेक्षया दुःखप्राचुर्याच्च सुखमपि दुःखयोगाद्धेयमिति भावः । तत्र परिणामदुःखं यथा सुखभोगकाले सुखं रागो हिंसादिकं च तन्नान्तरीयकं भवति । ताभ्यां चादृष्टादिद्वारोत्तरकाले दुःखमिति । तापदुःखं च दुःखकालेऽप्यनुतापादिभिर्दुःखान्तरम् । संस्कारदुःखं तु सुखदुःखसंस्कारतत्साधनेषु प्रवृत्तिनिवृत्त्याद्युत्थं दुःखमिति गुणवृत्त्याविरोधात्सुखकालेऽपि सूक्ष्मं दुःखमनुमेयं, सर्वकार्याणां त्रिगुणात्मकत्वादिति ॥ १९ ॥

## नागोजीभट्टवृत्तिः ।

ननु दुःखनिदानत्वेन हेयत्ववत्सुखनिदानत्वेनोपादेयत्वमपि स्यादत आह—**परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च सर्वमेव दुःखं विवेकिनः** । परिणामश्च तापश्च संस्कारश्च तज्जन्यानि दुःखानि तैः सम्बन्धात् तत्कारणत्वात्, तथा गुणानां सत्त्वरजस्तमसां या वृत्तयः सुखदुःखमोहास्तासामेककालानवस्थानरूपाविरोधाभावाच्च सर्वं प्रकृतिस्तत्कार्यसुखादिकं च विवेकिनः सुखदुःखतत्त्वसाक्षात्कारवतो दुःखमेव मतम् । दुःखकारणत्वदुःखसंभिन्नत्वाभ्यामित्यर्थः । तथाच सुखरागापेक्षया दुःखद्वेषस्य बलवत्त्वात्सुखापेक्षया दुःखस्य प्राचुर्याच्च सुखमपि दुःखयोगाद्धेयमिति भावः । तत्र परिणामदुःखं यथा सुखभोगकाले सुखे रागस्तत्प्रतिघातके द्वेषः । विना प्राणिवधमुपभोगाभावेन हिंसादिकं च तन्नान्तरीयकं भवति । ताभ्यां चादृष्टादिद्वारोत्तरकाले दुःखमिति । अतएव विषयसुखमविद्या विपर्यासलक्षणेति वृद्धाः । नच विषयतृष्णैव दुःखं भोगेन तृप्तौ तन्निवृत्तिरेव सुखमिति तस्या रागानुविद्धत्वाभावेन न परिणामदुःखतेति वाच्यम् । तृष्णाक्षयस्य सुखत्वेऽपि भोगाभ्यासस्य तदनुपायत्वात् । तेन तृष्णावृद्धेरेव दर्शनात् । तस्याश्च दुःखरूपत्वात् । किंच तृष्णाक्षयसुखस्यापि बुद्धिधर्मत्वेन त्रिगुणत्वाद्दुःखरूपतया हेयमेवेति जैगीषव्यव्याधसंवादेन भाष्ये दर्शितं तृतीयपादे । तापदुःखं च सुखकालेऽन्यदीयाधिकसुखं दृष्ट्वा तापजं दुःखम् । तस्य द्वेषानुविद्धत्वाद्द्वेषजः कर्माशयः । तथा सुखसाधनप्रार्थनया कंचिदनुगृह्णाति कंचित्पीडयति । तत्र परानुग्रहपीडाभ्यां धर्माधर्मोपचयो भवतीत्येषा तापदुःखता । संस्कारदुःखं च सुखानुभवात्संस्कारातिशयेन तत्स्मरणं ततस्तदुपपादके रागस्तदुपघातके द्वेषः, ताभ्यां कर्माणि तेभ्यो विपाकास्ततस्तदनुभवस्ततो वासनेति । तदिदमनादिदुःखस्रोतो योगिनमेव क्लिश्नाति, निर्मूलत्वात् । यथोर्णातन्तुरक्षिण्यस्तो दुःखयति नान्यगात्रेषु । इतरं पृथग्जनं स्वकर्मोपहतमुपात्तं दुःखं त्यजन्तं त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्तिरूपयाऽविद्यया हातव्येऽहंकारममकारौ कुर्वाणं सर्वे तापा उपतिष्ठन्ते । योगी त्वनादिदुःखोपहतः सर्वदुःखनाशकसम्यग्दर्शनमेव

(१) चतुष्टयात्सर्वे इति पाठान्तरम् ।

(२) तस्मादिति पाठान्तरम् ।

शरणीकरोति । गुणवृत्त्यविरोधाच्चेति । गुणाः सत्त्वरजस्तमांसि बुद्धिरूपेण परिणताः परस्परानुग्राहकस्वभावतयाऽविरुद्धास्त्रिगुणामेव सर्वां वृत्तिं जनयन्ति । उपादानकारणस्य त्रितयात्मकत्वात् कारणाभेदाच्च कार्यस्य । तेन सुखवृत्तिकालेऽपि सूक्ष्मं दुःखमनुसंधेयम्, क्षिप्रपरिणामितया चित्तस्यात्यन्तास्थिरत्वाच्च तद्वृत्तेरपि दुःखमयत्वं च । स्थूलसुखा सूक्ष्मदुःखा सुखवृत्तिरित्युच्यते । स्थूलदुःखा सूक्ष्मसुखा च दुःखवृत्तिः । न सङ्करः । स्थूलानां स्थूलैः सह विरोधेऽपि सूक्ष्मैः सहाविरोध एव । उपादानकारणेनाप्यत्यन्ताभेदाभावाद्बुद्धेः सुखमित्यादिव्यपदेशस्यापि न हानिः । सामान्यरूपेणाभेदः स्थूलात्मना च भेद इत्यवगन्तव्यम् । अस्य च महतो दुःखस्य मूलमविद्या । विवेकसाक्षात्काराच्च तन्निवृत्तौ तन्मूलक्लेशान्तराणां निवृत्तिः । ततः कारणाभावाद्धर्माद्यनुत्पत्तिः । अनारब्धफलैश्च संचितकर्मभिः क्लेशाख्यसहकार्युच्छेदात्फलानुत्पादः । आरब्धफलकर्मणां च भोगादेव नाशे सति देहपाते कारणाभावादपुनर्जन्म । तदेव च दुःखनिवृत्तिरूपो मोक्ष इति दिक् । तदेतच्छास्त्रं चतुर्व्यूहं—हेयं, हेयहेतुः, हानं, हानोपाय—इति । दुःखं हेयम् । दुःखहेतुरविद्या । दुःखात्यन्तनिवृत्तिः हानम् । विवेकसाक्षात्कारो हानोपायः । उपकरणसङ्ग्रहाय सर्वत्र व्यूहपदं राश्यर्थकम् ॥ १५ ॥

## मणिप्रभा ।

ननु ते दुःखफला हेया भवन्तु सुखफलास्तु कथं हेया इत्यत आह—**परिणामेति** ।

परिणामोऽन्यथाभावः । तापो वर्तमानः । संस्कारो भूतः । एतान्येव दुःखानि तैरिति विग्रहः । तथा हि विषयसुखभोगात्कामानलो वर्द्धते । वृद्धौ सत्यां काम्यालाभे दुःखमवश्यंभावि । लाभेऽपि कुतश्चिद्भोगसङ्कोचे दुःखम् । सङ्कोचके द्वेषः । ततः कामद्वेषाभ्यां पापोपचयाद् दुःखम् । असङ्कोचे व्याधिः पापश्च ततो दुःखमेवं भोगस्य परिणामदुःखता । तथा सुखभोगकाले विषयनाशभीत्या दुःखं वर्तते । नाशके द्वेषाच्च तापोऽस्तीति तापदुःखता भोगस्य । तथा सुखभोगनाशे संस्कारो भवति तेन स्मृत्या रागे सति पुण्यापुण्योपचयात्सुखदुःखभोगः पुनः संस्कार इत्यनन्ता दुःखसन्ततिः । यदि भोगनाशे संस्कारो न स्यात् तदा न दुःखसन्ततिः । भवत्येव तु संस्कार इति संस्कारदुःखता । इमानि दुःखानि विवेकिनोऽक्षिपात्रकल्पस्य योगिन उद्वेजकानि । न तु काठिनचित्तानां कर्मिणाम् । यथाऽक्षिपात्रं मृदुकल्पः ऊर्णातन्तुरपि उद्वेजयति नान्यमवयवम् । तस्माद्विवेकिनः सर्वमेव भोगसाधनं विषमिश्रान्नवद्दुःखमेव परिणामतापसंस्कारदुःखैर्योगाद् गुणवृत्तिविरोधाच्च । गुणाश्चित्तात्मना परिणतानि सत्त्वरजस्तमांसि तेषां वृत्तयः सुखदुःखमोहास्तासां विरोधः परस्परमभिभाव्याभिभावकत्वं तस्मादित्यर्थः । चलं हि गुणवृत्तं तत्र चित्ते या गुणवृत्तिराविर्भवति धर्मोद्भवात्सा पुनरधर्मोद्भवाद्धर्माभिभवे सति तिरोभवति । दुःखत्वं स्वाभाविकं तस्याः स्फुटयति स्वभावतो दुःखरूपैव सुखवृत्तिः दुःखात्मकरजोमिश्रसत्त्वपरिणामत्वात्किन्तु स्वकाले सत्त्वप्राधान्यात्तस्याः दुःखत्वमस्फुटं रजसः सत्त्वतिरोभावे सति स्फुटेयमिति सुखदुःखयोर्भेदव्यपदेशः । एतेन सुखस्य मोहत्वं व्याख्यातम् । अतो गुणपरिणामात्मकं सर्वमेव जगद् दुःखमोहात्मकं हेयमिति सिद्धम् ॥ १५ ॥

## चन्द्रिका ।

**परिणामेति** । योगिनस्तु ज्ञातक्लेशादिविवेकस्य सकलमेव भोगसाधनं परिणामतापसंस्कारदुःखैः सविषान्नवदाद्यन्ते मध्ये भोगकालेऽपि प्रतिकूलवेदनीयमेव ॥ १५ ॥

## योगसुधाकरः ।

विवेकिना तु ते सर्वे दुःखफला एवेत्याह—**परिणामेति** ।

परिणामदुःखं तापदुःखं संस्कारदुःखम्, तैरित्यर्थः । तत्र सुखे सत्यागामिनस्तावृशस्य सुखस्य कारणं पुण्यमननुष्ठाय वृथैव तदपेक्षा तामसी वृत्तिर्जायमाना चित्तं दुःखीकरोतीति परिणामदुःखम् । सुखभोगकाले रोगादिनिमित्तेन रजोगुणविकाररूपा संतापात्मिका प्रतिकूला वृत्तिर्जायते; सा च 'अहं

पापी धिङ्मां दुरात्मानम्' इत्येवं चित्तं संतापयति; तदिदं तापदुःखम् । तथा सुखनाशे तत्संस्कारः सुखं स्मारयित्वा स्मारयित्वा हृदयं दहति; तदिदं संस्कारदुःखम् । एतैर्दुःखैर्योगात् । किञ्च गुणवृत्तिविरोधाच्च, गुणानां सत्त्वरजस्तमसां या वृत्तयः प्रकाशप्रवृत्तिमोहात्मिकास्तासामतिचपलकल्लोलवन्निरन्तरं परिणततानां विरोधः परस्परं बाध्यबाधकत्वं तस्माच्च सर्वमेव भोगसाधनं जगद्विवेकिनो दुःखमेव, विवेकिनमक्षिपात्रमूर्णातन्तुरिवात्यन्तमुद्वेजयति । अतः सर्वं दुःखं हेयमिति भावः ॥ १५ ॥

**भोजवृत्तिः ।**

तदेवमुक्तस्य क्लेशकर्माशयविपाकराशेरविद्याप्रभवत्वादविद्यायाश्च मिथ्याज्ञानरूपतया सम्यग्ज्ञानोच्छेद्यत्वात्सम्यग्ज्ञानस्य च साधनहेयोपादेयावधारणरूपत्वात्तदभिधानायाऽऽह—

**हेयं दुःखमनागतम् ॥ १६ ॥**

भूतस्यातिक्रान्तत्वादनुभूयमानस्य च त्यक्तुमशक्यत्वादनागतमेव संसारदुःखं हातव्यमित्युक्तं भवति ॥ १६ ॥

**भावागणेशवृत्तिः ।**

तदेवमत्र पादे व्युत्थितचित्तस्य योगसाधनं क्रियायोगमुक्त्वा तत्फलप्रसङ्गेन क्लेशास्तद्धानप्रकारस्तेषां हेयत्वाय दुःखनिदानत्वं दुःखत्वं च प्रतिपादितम् । इदानीं संक्षेपेणोक्तं समस्तशास्त्रार्थमतिविस्तरतः प्रतिपादयिष्यति शास्त्रसमाप्तिपर्यन्तैः सूत्रैः । तदादौ योगफलं परमपुरुषार्थमाह—हेयमिति ।

अतीतं स्वयमेव गतं, वर्तमानं च बहुकालसाध्यसाधनानुष्ठानात्प्रागेव तृतीयक्षणे नंक्ष्यति । अतः पारिशेषादनागतावस्थमेव दुःखं योगादिभिर्हेयमित्यर्थः ॥ १६ ॥

**नागोजीभट्टवृत्तिः ।**

तत्रादौ हेयमाह—हेयं दुःखमनागतम् । अतीतं स्वयमेव नष्टम् । वर्तमानं बहुकालसाध्यसाधनानुष्ठानात्प्रागेव तृतीयक्षणे नङ्क्ष्यति । पारिशेषादनागतावस्थमेव दुःखं योगेन हेयमित्यर्थः ॥ १६ ॥

**मणिप्रभा ।**

तत्र यथा चिकित्साशास्त्रे रोगो रोगहेतुः आरोग्यं तद्धेतुरिति चतुष्टयं व्युत्पाद्यं तथाऽस्मिन्नपि शास्त्रे हेयं हेयहेतुर्मोक्षस्तद्धेतुरिति चतुष्टयं व्युत्पादयितुं विशिष्य हेयं दर्शयति—हेयमिति ।

अतीतस्य दुःखस्य भोगेन गतत्वाद्वर्तमानदुःखस्य भोगेनैव क्षयादनागतमेव दुःखं हेयमित्यर्थः ॥१६॥

**चन्द्रिका ।**

हेयमिति । भूतस्य व्यतिक्रान्तत्वादनुभूयमानस्य च त्यक्तुमशक्यत्वादनागतमेव संसारदुःखं हातव्यम् ॥ १६ ॥

**योगसुधाकरः ।**

अधुनानागतदुःखस्य विशिष्य हेयत्वमाह —हेयमिति ।

अतीतस्य गतत्वाद्वर्तमानस्य भोगेनैव क्षयादनागतमेव दुःखं हेयमित्यर्थः ॥ १६ ॥

**भोजवृत्तिः ।**

हेयहेतुमाह—

**(१)द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥**

द्रष्टा चिद्रूपः पुरुषः, दृश्यं बुद्धिसत्त्वं, तयोरविवेकख्यातिपूर्वको योऽसौ संयोगो भोग्यभोक्तृत्वेन संनिधानं स हेयस्य दुःखस्य गुणपरिणामरूपस्य(२) संसारस्य हेतुः कारणं तन्निवृत्त्या संसारनिवृत्तिर्भवतीत्यर्थः ॥ १७ ॥

---

(१) हेयस्य दुःखस्य हेतुमाह द्रष्टृदृश्ययोरिति

(२) गुणपरिणामस्येति पाठान्तरम् ।

भावागणेशवृत्तिः ।

हेतूच्छेदे पुरुषव्यापाराद्धेयहेतुं प्रदर्शयति—द्रष्टृदृश्ययोरिति।

सुखदुःखमोहात्मकाखिलदृश्याकारत्वेनाखिलदृश्यरूपया बुद्ध्या द्रष्टुः पुरुषस्य जन्माख्यः संयोगविशेषो दुखहेतुरित्यर्थः ॥ १७ ॥

नागोजीभट्टवृत्तिः।

हेतुच्छेदे पुरुषव्यापाराद्धेयहेतुमाह—द्रष्टृदृश्ययोः संयोगो हेयहेतुः। सुखमोहदुःखात्मकाखिलदृश्याकारत्वेनाखिलदृश्यरूपया बुद्ध्या तादृशबुद्धिप्रतिबिम्बत्वेन द्रष्टुः पुरुषस्य यः संयोगो भोग्यभोक्तृत्वनियामको जन्माख्यः स दुःखहेतुरित्यर्थः। दृश्यं हि अयस्कान्तमणिः स्वसंनिधिमात्रेण लोहमिव पुरुषमाकर्षति। पुरुषायात्यन्ताभेदेनात्मानं दर्शयति। तावतैव तद्रूपानुभवविषयता चापद्यते। इदमेव च तस्य दृश्यत्वम्। पुरुषस्य द्रष्टृत्वं च भोग्यभोक्तृत्वं च तत्स्वामित्वं च। स च संयोगोऽनादिनिमित्ताविद्याप्रभवतयाऽनादिः। क्लेशकर्मतद्वासनासंतानोऽप्यनादिः। प्रतिसर्गावस्थायां सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुनः कालवशादेव तादृगेव भवति। वर्षात्यये मृद्भावमुपगतो मण्डूको यथा वृष्टौ पुनर्मण्डूकभावमापद्यते तद्वत्। अयं हि संयोगश्चित्तस्यैव दुःखहेतुस्तास्मिंस्तु दुःखिते तदाकारानुरोधी दुःखित इवेति दिक् ॥ १७ ॥

मणिप्रभा।

हेयहेतुमाह—द्रष्टृति।

द्रष्टा चिद्रूपः पुरुषो बुद्धिस्थस्वच्छायात्मकदर्शनवान्। दृश्यं बुद्धिसत्त्वम्। तयोः संयोगः स्वस्वामिभावः। बुद्धिसत्त्वं हि विविधशब्दाद्याकारेणेन्द्रियादिद्वारा परिणतं चिच्छायाऽऽपन्नस्या पुरुषाभेदेन दृश्यमानं सन्निधिमात्रेणायस्कान्तमणिवदुपकारकं स्वनिष्ठभोगापवर्गौ पुरुषं दर्शयत्स्वं भवति पुरुषस्य स्वामिनः। सोऽयमभेदभ्रान्तिरूपाविद्याकृतः पुरुषार्थाधीनस्थितिकः संयोगो हेयस्य दुःखस्य हेतुरित्यर्थः ॥ १७ ॥

चन्द्रिका।

द्रष्टृति। द्रष्टा चिद्रूपः पुरुषो दृश्यं बुद्धितत्त्वम्। तयोरविवेकख्यातिपूर्वको योऽसौ संयोगो भोक्तृभोग्यत्वेन सन्निधानं स हेयस्य दुःखस्य संसारस्य हेतुः कारणम् ॥ १७ ॥

योगसुधाकरः।

अथ हेयहेतुमाह—द्रष्टृदृश्ययोरिति।

द्रष्टा दृग्रूपः पुरुषः, दृश्यं बुद्धिसत्त्वम्, तयोः संयोगः स्वस्वामिभावः, स चेन्द्रियप्रणाडिकया चित्ते विविधशब्दाद्याकारेण परिणते सति तत्र चितिच्छायायां प्रतिबिम्बितायां तदविवेकरूपाविद्याकृतः। स च हेयस्य दुःखस्य हेतुरित्यर्थः ॥ १७ ॥

भोजवृत्तिः।

द्रष्टृदृश्ययोः संयोग इत्युक्तं, तत्र दृश्य(१)स्वरूपं कार्यं प्रयोजनं चाऽऽह—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥**

प्रकाशः सत्त्वस्य धर्मः, क्रिया प्रवृत्तिरूपा रजसः, स्थितिर्नियमरूपा तमसः, ताः प्रकाशक्रियास्थितयः शीलं स्वाभाविकं रूपं यस्य तत्तथाविधमिति स्वरूपमस्य निर्दिष्टम्। भूतेन्द्रियात्मकमिति। भूतानि स्थूलसूक्ष्मभेदेन द्विविधानि पृथिव्यादीनि गन्धतन्मात्रादीनि च। इन्द्रियाणि बुद्धीन्द्रियकर्मेन्द्रियान्तःकरणभेदेन त्रिविधानि। उभयमेतद्ग्राह्यग्रहणरूपमात्मा स्वरूपाभिन्नः परिणामो यस्य तत्तथाविधमित्यनेनास्य कार्यमुक्तम्। भोगः कथितलक्षणः, अपवर्गो विवेकख्यातिपूर्विका संसारनिवृत्तिः, तौ भोगापवर्गावर्थः प्रयोजनं यस्य तत्तथाविधं दृश्यमित्यर्थः ॥ १८ ॥

---

(१) दृश्यस्येति पाठान्तरम्।

### भावागणेशवृत्तिः ।

द्रष्टृदृश्यसंयोगः सूत्रैर्लक्षणीयस्तत्रादौ दृश्यस्वरूपं लक्षयति—प्रकाशेति ।

प्रलये प्रकाशादिकार्याभावाच्छीलपदम् । अत्र प्रकाशो बुद्धिवृत्त्यादिरूपालोकः । क्रिया प्रयत्नचेष्टादिः । स्थितिश्च प्रकाशक्रिययोः प्रतिबन्धः । एतत्त्रयशीलं यच्छास्त्रप्रसिद्धं सत्त्वादिगुणत्रयं तद्दृश्यं पुरुषभोग्यत्वेन दृश्यशब्दवाच्यम् । तस्य प्रकाशादिरूपतायां हेतुगर्भं विशेषणं भूतेन्द्रियात्मकमिति । स्थूलसूक्ष्माणां भूतानां कारणं तेन स्थितिशीलत्वं लब्धम् । स्थूलसूक्ष्माणामिन्द्रियाणां च कारणम् । तेन प्रकाशक्रियाशीलत्वं लब्धम् । तत्र स्थूलेषु दशेन्द्रियेषु हेतुत्वात्क्रियाशीलत्वम् । सूक्ष्मेषु चान्तःकरणरूपेन्द्रियेषु हेतुत्वात्प्रकाशशीलत्वम् । इति गुणानां स्वरूपसत्ता । तत्प्रवृत्तेः प्रयोजनमाह भोगापवर्गार्थमिति । पुरुषस्य भोगापवर्गावेवार्थो यस्य तथेत्यर्थः ॥ १८ ॥

### नागोजीभट्टवृत्तिः ।

तत्र दृश्यपदार्थमाह—प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् । प्रलये प्रकाशादिकार्याभावाच्छीलपदम् । तत्र प्रकाशो बुद्धिवृत्त्यादिरूपालोकस्तच्छीलं सत्त्वम् । क्रिया प्रयत्नचेष्टादिस्तच्छीलं रजः । स्थितिः प्रकाशक्रिययोः प्रतिबन्धस्तच्छीलं तमः । ते गुणाः परस्परोपरक्ता इतरेतराश्रयेण कार्यमारभन्ते । तत्र क्वचित्कार्ये जननीये एकस्य प्राधान्यमपरयोः सहकारित्वम् । यथा दिव्यशरीरे जनयितव्ये सत्त्वं प्रधानं, मानुषे रजः, तिर्यक्शरीरे तमः । ते च पुरुषस्य भोगापवर्गार्थं संनिधिमात्रोपकारकतया प्रवर्तन्ते । तदाह—भूतेन्द्रियात्मकमिति । तत्र स्थूलसूक्ष्मभूतकारणत्वेन स्थितिशीलत्वं, स्थूलदशेन्द्रियहेतुत्वात्क्रियाशीलत्वं, अन्तःकरणरूपसूक्ष्मेन्द्रियहेतुत्वात्प्रकाशशीलत्वम् । तत्प्रवृत्तेः प्रयोजनमाह—भोगापवर्गार्थमिति । तत्र सुखदुःखरूपाया बुद्धेः पुरुषेणाविभागापन्नतयावधारणं भोगः । भोक्तुः स्वरूपावधारणमपवर्ग इति भाष्यम् । तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ योद्धृगतजयपराजयौ राजनीव पुरुषे व्यपदिश्येते । बन्धमोक्षावप्येवमिति च भाष्यम् १८

### मणिप्रभा ।

दृश्यं प्रपञ्चयति—प्रकाशेति ।

प्रकाशशीलं सत्त्वम् । क्रियाशीलं रजः । स्थितिः प्रकाशक्रिययोः प्रतिबन्धः तच्छीलं तमः । तत्र सत्त्वं मृदुत्वात्सुखम् । तापकं रजः । एवं सत्त्वरजसोरुत्पत्तापकभावे सति मोहो भवति पुरुषस्य ममतयेति । तदिदं गुणत्रयं स्वस्वकार्ये मिथः सहायमविवेकि भाग्यं विवेकित्याज्यं परस्पराभिभावकं परस्पराङ्गाङ्गिभावं सुखप्रकाशलाघवदुःखक्रियोपष्टम्भमोहावरणगौरवकार्यलक्षणत्रयभेदं स्वतःपरस्परानविभागाद् दुर्ज्ञानभेदं प्रधानशब्दवाच्यं भूतेन्द्रियात्मकम् । भूतानि स्थूलानि तन्मात्राणि, इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि दश, बुद्ध्यहङ्कारमनांसि त्रीण्यन्तःकरणानि, आत्मा स्वाभिन्नः परिणामो यस्य तत्, भोगापवर्गार्थं भोगमोक्षप्रयोजकं दृश्यमित्यर्थः ॥ १८ ॥

### चन्द्रिका ।

दृश्यस्य स्वरूपं कार्यं प्रयोजनं चाह प्रकाशेति । प्रकाशः सत्त्वरूपः क्रिया प्रवृत्तिरूपा रजः स्थितिर्नियमरूपा तम एतद्रूपम् । भूतानीन्द्रियाणि आत्मा स्वरूपं यस्य कार्यमुक्तम् । भोगोऽपवर्गः संसारनिवृत्तिस्तावर्थः प्रयोजनं यस्य दृश्यस्य ॥ १८ ॥

### योगसुधाकरः ।

दृश्यं प्रपञ्चयति—प्रकाशेति ।

प्रकाशः प्रख्यारूपः, क्रिया प्रवृत्तिरूपा, स्थितिर्नियमरूपा, ताः सत्त्वरजस्तमसां धर्माः शीलं स्वाभाविकं रूपं यस्य तत्तथोक्तम्, भूतेन्द्रियात्मकं भूतानि महाभूततन्मात्रभेदभिन्नानि इन्द्रियाणि बुद्धिकर्मेन्द्रियान्तःकरणभेदभिन्नानि एतद्ग्राह्यग्रहणरूपमात्मा स्वाभिन्नः परिणामो यस्य तत्तथोक्तम्, भोगापवर्गार्थं भोगमोक्षप्रयोजकं तद् दृश्यमित्यर्थः ॥ १८ ॥

## भोजवृत्तिः ।

तस्य च दृश्यस्य नानावस्थारूपपरिणामात्मकस्य हेयत्वेन ज्ञातव्यत्वात्तदवस्थाः कथयितुमाह—

**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥**

गुणानां पर्वाण्यवस्थाविशेषाश्चत्वारो ज्ञातव्या इत्युपदिष्टं भवति । तत्र विशेषा महाभूतेन्द्रियाणि, अविशेषास्तन्मात्रान्तःकरणानि, लिङ्गमात्रं बुद्धिः, अलिङ्गमव्यक्तमित्युक्तम् । सर्वत्र त्रिगुणरूपस्याव्यक्तस्यान्वयित्वेन प्रत्यभिज्ञानादवश्यं ज्ञातव्यत्वेन योगकाले चत्वारि पर्वाणि निर्दिष्टानि ॥ १९ ॥

## भावागणेशवृत्तिः ।

नन्वेवं कारणरूपस्य सत्त्वादिगुणत्रयस्यैव दृश्यत्वं प्राप्तं न विकाराणामित्यतो गुणपर्वविभागं कार्यकारणभेदस्तानपि संगृह्णातीत्याह—**विशेषेति** ।

सत्त्वादिगुणात्मको वंशः, तस्य विशेषादीनि पर्वाणि पत्रशाखाङ्कुरबीजवदभेदात् नात्यन्तं भिन्नानीत्यर्थः । तत्र विशेषाः षोडश विकारा एकादशेन्द्रियपञ्चमहाभूतरूपाः । अविशेषाश्च पञ्चतन्मात्राहङ्काररूपाः षट् : लिङ्गमात्रं महत्तत्त्वम्, अलिङ्गं च साम्यावस्थितिः ॥ १९ ॥

## नागोजीभट्टवृत्तिः ।

दृश्यानां गुणानां स्वरूपभेदमाह—**विशेषाविशेषालिङ्गमात्रालिङ्गानि गुणपर्वाणि** । सत्त्वादिगुणात्मकस्य वृक्षस्य पत्रशाखाङ्कुरबीजवदवस्थाभेदादेतानि पर्वाणि नात्यन्तं भिन्नानीत्यर्थः । तत्र विशेषाः एकादशेन्द्रियपञ्चमहाभूतरूपाः षोडशविकाराः शान्तघोरमूढलक्षणविशेषवत्त्वात् । तद्धीत्यात्र पञ्चतन्मात्राहंकाररूपाः षडविशेषाः । शब्दस्पर्शरूपरसगन्धास्तन्मात्राणि एकद्वित्रिचतुःपञ्चलक्षणानि । आत्मना पूर्वेण शब्देन च द्विलक्षणं स्पर्शतन्मात्रमेवमुत्तरोत्तराणि आत्मना पूर्वाभ्यां पूर्वैश्च त्रिचतुःपञ्चलक्षणानीति बोध्यम् । सकलपुरुषार्थस्य शब्दादिभोगसत्त्वपुरुषान्यताख्यातिरूपस्य गमकत्वेन महत्तत्त्वं लिङ्गमात्रम् । क्वापि लयागमनादलिङ्गं प्रधानम् । तच्च गुणानां साम्यावस्थारूपम् । तच्च पुरुषार्थक्रियाक्षमत्वसत्ताभावादसत्, कार्यजनकत्वरूपसत्तावत्त्वात्सदिति चोच्यते । न सत् नासदिति चोच्यते । ताभ्यां च पुरुषार्थहेतुत्वासंभवात्सा नित्या । यदि सा भोगादिरूपपुरुषार्थहेतुः स्यात्तदा साम्यावस्थात्वमेव त्यज्येत । एवं च तस्याः पुरुषार्थकारणत्वाज्ज्ञानाच्च सा स्वतः पुरुषार्थहेतुः । अतो नित्या । महदाद्यवस्थास्तु पुरुषार्थहेतुत्वादानित्याः । तदुत्पत्तिलयव्यवहारेणैव गुणानां तद्व्यवहारो नतु स्वतो गुणानामुत्पत्तिर्लयो वास्ति यथा धननाशादेवदत्तस्य नष्टत्वव्यवहारः ॥ १९ ॥

## मणिप्रभा ।

एतेषां गुणानां परिणामं विभज्य दर्शयति—**विशेषेति** ।

विशिष्यन्त इति विशेषा व्यावृत्ताः षोडशविकाराः खवायुतेजोऽबवनयः स्थूलभूतानि पञ्च, ज्ञानकर्मेन्द्रियाणि दश, मनश्चेत्येते षोडश विकारा एव न तत्त्वान्तरप्रकृतयः । एतेषां विकाराणां प्रकृतयो बुद्धेर्विकृतयः षडविशेषाः पञ्चतन्मात्राहङ्काराः । अहङ्कारात्पञ्चतन्मात्राणीति साङ्ख्याः । अहङ्कारस्यानुजानि बुद्धेरपत्यानि तन्मात्राणीति योगाः । तत्र पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धाख्यानि स्थूलभूतानां प्रकृतयः । अहङ्कारः सत्त्वेन रजसा उभयेन ज्ञानकर्मेन्द्रियमनसां प्रकृतिः । लयं गच्छतीति लिङ्गं, तन्मात्रं महत्तत्त्वं मात्रपदेन च विशेषाविशेषाभ्यां वैलक्षण्यं द्योत्यते । तद्धि निर्विकल्पकाध्यवसायात्मकं प्रधानस्याद्यकार्यम् । अलिङ्गं गुणानां साम्यावस्थारूपं प्रधानम् । एतानि चत्वारि गुणानां पर्वाणि परिणामाः गुणत्वं चेतनं प्रति शेषत्वं मन्तव्यम् ॥ १९ ॥

## चन्द्रिका ।

**विशेषेति** । गुणानां पर्वाणि अवस्थाविशेषाश्चत्वारो ज्ञातव्याः । विशेषा भूतेन्द्रियाणि, अविशेषास्त-

न्मात्रान्तःकरणं, लिङ्गमात्रं बुद्धिः, अलिङ्गमव्यक्तम् । अव्यक्तस्य सर्वव्याप्यायित्वेन ज्ञानादवश्यं ज्ञातव्यानि ॥ १९ ॥

### योगसुधाकरः ।

एतस्य गुणत्रयात्मकस्य दृश्यस्य परिणामं विभज्य दर्शयति—विशेषेति ।

विशेषा महाभूतेन्द्रियमनोरूपाः षोडश विकाराः, अविशेषास्तन्मात्राहंकाराः षट् प्रकृतिविकृतयः, लयं गच्छतीति लिङ्गमात्रं प्रकृतिविकाररूपं महत्तत्त्वम्, अलिङ्गं गुणानां सम्यावस्थारूपं प्रधानम्; एतानि चत्वारि गुणानां पर्वाणि अवस्थाविशेषा इत्यर्थः ॥ १९ ॥

### भोजवृत्तिः ।

एवं हेयत्वेन दृश्यस्य प्रथमं ज्ञातव्यत्वाचदवस्थासहितं व्याख्यायोपादेयं द्रष्टारं व्याकर्तुम्(१) आह—

## द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥

द्रष्टा पुरुषो दृशिमात्रश्चेतनामात्रः । मात्रग्रहणं धर्मधर्मिनिरासार्थम् । केचिद्धि चेतनामात्मनो धर्ममिच्छन्ति । स शुद्धोऽपि परिणामित्वाद्यभावेन सुप्रतिष्ठोऽपि(२) प्रत्ययानुपश्यः प्रत्यया विषयोपरक्तानि ज्ञानानि तानि अनु अव्यवधानेन प्रतिसंक्रमाद्यभावेन पश्यति । एतदुक्तं भवति—जातविषयोपरागायामेव बुद्धौ संनिधिमात्रेणैव पुरुषस्य द्रष्टृत्वमिति ॥ २० ॥

### भावागणेशवृत्तिः ।

सूत्राभ्यां दृश्यशब्दार्थो व्याख्यातः । द्रष्टृशब्दार्थो व्याख्यायते—द्रष्टेति ।

दृशिमात्रो ज्ञानमात्ररूपः द्रष्टृशब्दार्थः । तत्र प्रमाणमाह शेषेण, स च शुद्धोऽपीति । निर्विकारोऽपि प्रत्ययानुपश्यः । प्रत्ययं बौद्धं वृत्तिजातं तदनुकारीव सन्पश्यति । वृत्तेः स्वेनैव ग्रहणे कर्मकर्तृविरोधाद्वृत्तिप्रवाहकल्पने चानवस्थानाद्वृत्तिसाक्षितया पुरुषः सिध्यतीत्यर्थः । निर्विकारस्य व्यर्थग्रहणमनुशब्देनोपपादितम् । वृत्तेरर्थग्रहणमर्थाकारतारूपो विकारः स्वप्नादौ सिद्ध एवास्ति । अतस्तद्दृष्टान्तेन पुरुषस्यापि वृत्तिग्रहणं वृत्त्याकारता वाच्या । सा च वृत्तिप्रतिबिम्बरूपा वृत्त्यनुकारितेति ॥ २० ॥

### नागोजीभट्टवृत्तिः ।

अथ द्रष्टृपदार्थमाह—द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः । दृशिमात्रो ज्ञानमात्ररूपः । एतेन ज्ञानधर्मकत्वं निरस्तम् । स बुद्धेः प्रतिसंवेदी तदविभागापन्न इति यावत् । अविभाग एव च प्रतिबिम्ब इत्युच्यते । स च तया नात्यन्तमभिन्नः । कदाचिदेव तत्तद्विषयाकारताधारणेन तस्याः परिणामित्वात् । संप्रज्ञातव्युत्थानयोः सदा ज्ञातविषयत्वेनापरिणामित्वात्पुरुषस्य । परिणामी तु न सदा ज्ञातविषयो यथा श्रोत्रादिः । किञ्च बुद्धिः परार्था क्लेशकर्मवासनाविषयेन्द्रियादिभिः सह पुरुषार्थकारित्वात्, शय्यादिवत् । पुरुषस्तु नैवमिति नात्यन्ताभेदः । नात्यन्तभिन्नो व्युत्थानदशायां यतः शुद्धोऽप्यपरिणाम्यपि प्रत्ययं बौद्धं प्रत्ययं वृत्तिजातमनुकुर्वन्निव पश्यति विषयजातमित्यर्थः । तमनुकुर्वन्नतदात्मापि तदात्मक इव भाति । तदुक्तं—प्राप्तचैतन्योपग्रहस्वरूपा बुद्धिवृत्तेरनुकारणम् । तदविशिष्टः स आख्यायत—इति भाष्ये । वृत्तेः स्वेनैव ग्रहणे कर्तृकर्मविरोधः, वृत्तिप्रवाहकल्पने चानवस्था तत्साक्षी तदविभागमापन्नः पुरुषः सिध्यति । वृत्तेरर्थग्रहणं ह्यर्थाकारतारूपो विकारः । तद्दृष्टान्तेन पुरुषस्यापि वृत्तिग्रहणं वृत्त्याकारतैव । सा चोक्तप्रतिबिम्बरूपा वृत्त्यनुकारितैवेति दिक् ॥ २० ॥

### मणिप्रभा ।

एवं दृश्यं निरूप्य द्रष्टारं निरूपयति—द्रष्टेति ।

द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो न ज्ञानादिधर्मकः । अतः शुद्धोऽपरिणाम्यपि प्रत्ययं बुद्धिवृत्तिमनुसृत्य पश्यतीति प्रत्ययानुपश्यः स्वस्य बुद्ध्यविवेकाद्वृत्तिभिरेकीभूतः शब्दादीन् पश्यतीत्यर्थः । तदुक्तं-वृत्तिसारूप्यमितरत्र-इति ॥ २० ॥

---

(१) व्याख्यातुमिति पाठान्तरम् । (२) स्वप्रतिष्ठोऽपीति पाठान्तरम् ।

### चन्द्रिका ।

द्रष्टृस्वरूपमाह—द्रष्टेति ।

द्रष्टा पुरुषो दृशिस्वरूपश्चेतनामात्रस्वरूपः स शुद्धोऽपि प्रत्यानुपश्यः, प्रत्यया विषयोपरक्तज्ञानानि तानि अनुपश्यतीति अव्यवधानेन सन्निधानमात्रेण बुद्धावुपरागे सति पुरुषस्य द्रष्टृत्वमिति ॥२०॥

### योगसुधाकरः ।

इत्थं हेयं दृश्यं प्रथमं निरूप्य उपादेयं द्रष्टारं निरूपयितुमाह—द्रष्टेति ।

द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो न ज्ञानादिधर्मकः, तद्धर्मकत्वे तस्य वृत्तिरूपतया विनाशशीलत्वात् 'उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्' इति न्यायेनात्मनः कौटस्थ्यं हीयेत । अतः शुद्धः अपरिणाम्यपि प्रत्ययं बौद्धमनुपश्यति । तमनुपश्यन्नतदात्मापि तदात्मभूत इव प्रतिभासत इत्यर्थः ॥ २० ॥

### भोजवृत्तिः ।

स एव भोक्तेत्याह—

## (१) तदर्थ एव दृश्यस्याऽऽत्मा ॥ २१ ॥

दृश्यस्य प्रागुक्तलक्षणस्याऽऽत्मा यत्स्वरूपं स तदर्थस्तस्य पुरुषस्य भोक्तृत्वसंपादनं नाम स्वार्थपरिहारेण प्रयोजनम् । न हि प्रधानं प्रवर्तमानमात्मनः किंचित्प्रयोजनमपेक्ष्य प्रवर्तते किन्तु पुरुषस्य भोक्तृत्वं संपादयितुमिति (२) ॥ २१ ॥

### भावागणेशवृत्तिः ।

द्रष्टरि प्रमाणान्तरमाह—तदर्थ इति ।

तस्य द्रष्टुरर्थः प्रयोजनं भोगापवर्गावेव प्रयोजनं यस्य स तदर्थः । तथाच द्रष्टुर्भोगापवर्गप्रयोजनकमेव दृश्यस्यात्मा स्वरूपं कार्यकारणात्मकं गुणत्रयं न स्वार्थमित्यर्थः । तथा च—गुणाः परार्थाः संहत्यकारित्वात् शय्यादिवदित्यनुमानेन प्रकृत्यादिभ्योऽतिरिक्तस्य द्रष्टुः सिद्धिरिति । [ ] । संहत्यकारित्वं स्वकार्ये सहकारिसापेक्षत्वम् ॥ २१ ॥

### नागोजीभट्टवृत्तिः ।

अथ संयोगाङ्गदृश्यस्य द्रष्टृत्वमाह—तदर्थ एव दृश्यस्यात्मा । तस्य द्रष्टुरर्थः प्रयोजनं भोगापवर्गावेव प्रयोजनं यस्य स तदर्थः । द्रष्टुर्भोगापवर्गफलकं दृश्यस्यात्मा स्वरूपं कार्यकारणात्मकं गुणत्रयं न स्वार्थमित्यर्थः । यतो दृश्यमेव पुरुषस्य भोग्यम् । यतो रूपशब्दादयो विषयाः सुखदुःखात्मतयानुकूलयितारः प्रतिकूलयितारश्च । अनुकूलनीयादिश्चेतनः पुरुष एव । न स्वात्मा कर्तृकर्मविरोधात् । किं च यतो दृश्यस्वरूपं यावत्पुरुषार्थमनुवर्तते तन्निवृत्तौ च निवर्ततेऽतो न स्वार्थम् । तदनेन गुणाः परार्थाः संहत्यकारित्वाच्छय्यादिवदित्यनुमानं प्रकृत्याद्यतिरिक्तपुरुषे मानमपि दर्शितम् । संहत्यकारित्वं कार्ये सहकारिसापेक्षत्वम् ॥ २१ ॥

### मणिप्रभा ।

एवं दृश्यद्रष्टारावुक्तौ तयोः शेषशेषित्वमाह—तदर्थ इति ।

दृश्यस्य भोग्यस्य स्वरूपं द्रष्टुरर्थमेव न स्वार्थम् अचेतनत्वादित्यर्थः ॥ २१ ॥

### चन्द्रिका ।

तदर्थ इति । उक्तलक्षणस्य दृश्यस्यात्मा स्वरूपं तदर्थः पुरुषभोक्तृत्वसम्पादनमेव प्रयोजनमस्य २१

### योगसुधाकरः ।

इत्थं दृश्यद्रष्टारावभिधाय तयोः शेषशेषित्वमाभिधातुमाह—तदर्थ इति ।

---

(१) स्वस्वामिभावलक्षणसम्बन्धाङ्गं दृश्यस्य द्रष्टृर्थत्वमाह तदर्थ इति ।

(२) भोगं संपादयामीति पाठान्तरम् ।

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इति ॥ ४२ ॥

चन्द्रिका ।

सन्तोषफलमाह— सन्तोषादिति ।

सन्तोषप्रकर्षे योगिनस्तथाविधमान्तरं सुखमाविर्भवति यस्य बाह्यसुखं शतांशेनापि न समम् ॥ ४२ ॥

योगसुधाकरः ।

संतोषादिति । संतुष्टस्य योगिनः सत्त्वोत्कर्षादन्तर्निरतिशयं सुखमाविर्भवति । न केवलमेवम्; प्रत्युत वैषयिकं सुखं विषमिव प्रतिकूलं भवतीत्यर्थः । तदुक्तम्—

संतोषामृतपानेन ये शान्तास्तृप्तिमागताः ।
भोगश्रीरतुला तेषामेषा प्रतिविषीयते ॥ इति ॥ ४२ ॥

भोजवृत्तिः ।

तपसः फलमाह—

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

तपः समभ्यस्यमानं चेतसः क्लेशादिलक्षणाशुद्धिक्षयद्वारेण कायेन्द्रियाणां सिद्धिमुत्कर्षमादधाति । अयमर्थः-चान्द्रायणादिना चित्तक्लेशक्षयस्तत्क्षयादिन्द्रियाणां सूक्ष्मव्यवहितविप्रकृष्टदर्शनादिसामर्थ्यमाविर्भवति । कायस्य यथेच्छमणुत्वमहत्त्वादीनि ॥ ४३ ॥

भावागणेशवृत्तिः ।

कायेति । तपःस्थैर्यात्कायेन्द्रिययोः सिद्धिरशुद्धिक्षयद्वारा भवति । अशुद्धिः पापं तमोगुणश्च । कायसिद्धिरणिमाद्या, इन्द्रियसिद्धिः दूराच्छ्रवणाद्या । एतानि भूतिपादे व्याख्यास्यन्ते ॥ ४३ ॥

नागोजीभट्टवृत्तिः ।

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः । तपःस्थैर्ये पापतमोगुणरूपाशुद्धिक्षयात्कायसिद्धिरणिमादिरूपा इन्द्रियसिद्धिर्दूराच्छ्रवणाद्या भवतीत्यर्थः ॥ ४३ ॥ ४४ ॥

मणिप्रभा ।

कायेति । स्वधर्मकृच्छ्रचान्द्रायणादिना क्लेशपापक्षयात् कायस्याणिमादिसिद्धिरिन्द्रियाणां दूरसूक्ष्मार्थग्राह्यत्वसिद्धिर्भवति ॥ ४३ ॥

चन्द्रिका ।

तपसः फलमाह- कायेति ।

तपः समभ्यस्यमानं चेतसः क्लेशादिलक्षणाशुद्धिक्षयद्वारेण कायेन्द्रियाणां सिद्धिमुत्कर्षमादधाति इन्द्रियाणां सूक्ष्मव्यवहितादिदर्शनसामर्थ्यं कायस्याणुत्वमहत्त्वादि यथेच्छं सम्पद्यते ॥ ४३ ॥

योगसुधाकरः ।

कायेति । स्वधर्मकृच्छ्रादिना क्लेशपापक्षयात्कायस्याणिमादिसिद्धिः, इन्द्रियाणां च सूक्ष्मव्यवहितविप्रकृष्टार्थग्राहित्वसिद्धिर्भवतीत्यर्थः ॥ ४३ ॥

भोजवृत्तिः ।

स्वाध्यायस्य फलमाह—

स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥

अभिप्रेतमन्त्रजपादिलक्षणे स्वाध्याये प्रकृष्यमाणे योगिन इष्टयाऽभिमतया देवतया सम्प्रयोगो भवति सा देवता प्रत्यक्षीभवतीत्यर्थः ॥ ४४ ॥

भावागणेशवृत्तिः ।

स्वाध्यायादिति । स्वाध्यायस्थैर्यादिष्टदेवतानां संप्रयोगो दर्शनं भवति ॥ ४४ ॥

मणिप्रभा ।

**स्वाध्यायेति** । इष्टमन्त्रादिजपात् स्वेष्टदेवतायाः सम्भाषणादि सिध्यति ॥ ४४ ॥

चन्द्रिका ।

स्वाध्यायफलमाह--**स्वाध्यायादिति** ।

मन्त्रजपादिलक्षणे स्वाध्याये प्रकृष्यमाणे इष्टया देवतया सम्प्रयोगः सा देवता प्रत्यक्षीभवतीत्यर्थः॥४४॥

योगसुधाकरः ।

**स्वाध्यायादिति** । अभिमतमन्त्रजपादभिमतदेवतायाः संभाषणादिकं सिध्यतीत्यर्थः ॥ ४४ ॥

भोजवृत्तिः ।

ईश्वरप्रणिधानस्य फलमाह—

**समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥**

ईश्वरे यत्प्रणिधानं भक्तिविशेषस्तस्मात्समाधेरुक्तलक्षणस्याऽऽविर्भावो भवति । यस्मात्स भगवानीश्वरः प्रसन्नः सन्नन्तरायरूपान्क्लेशान्परिहृत्य समाधिं संबोधयति ॥ ४५ ॥

भावागणेशवृत्तिः ।

**समाधीति** । ईश्वरप्रणिधानस्थैर्यात्समाधिसिद्धिर्योगनिष्पत्तिर्भवतीत्यर्थः ॥ ४५ ॥

नागोजीभट्टवृत्तिः

**समाधिसिद्धिरीश्वरप्रणिधानात्** । समाधिसिद्धिर्योगसिद्धिः इतरकारणेभ्योऽस्यान्तरङ्गत्वं सूचयति ॥ ४५ ॥

मणिप्रभा ।

**समाधीति** । ईश्वरार्पितसर्वभावस्य भक्त्यैव योगसिद्धिर्भवति । न चैवं सति यमादिसप्ताङ्गवैयर्थ्यं स्यादिति वाच्यम् । अङ्गैर्भक्त्या वा योगसिद्धिरिति विकल्पाभ्युपगमात् । तदुक्तम्–"ईश्वरप्रणिधानाद्वे"ति न वा भक्तिपक्षेऽङ्गवैफल्यं, यमादीनां भक्तावप्यङ्गत्वसम्भवात् । तेषां भक्तियोगोभयार्थत्वं दध्न इन्द्रियक्रतूभयार्थत्ववदविरुद्धम् । न चाङ्गानामावश्यकत्वे तैरेव सिद्धेः किं भक्त्येति वाच्यम् । भक्तिहीनोपायैर्दूरे योगसिद्धिः भक्त्यमृतवर्षिभिरासन्नतमा योगसिद्धिरिति चिराचिरयोगरूपफलप्राप्तिसाधनत्वेन विकल्पोपपत्तेः । सा चेश्वरे भक्तिः प्रत्यगात्मयोगविषयाभिन्नविषयेति बहिरङ्गत्ववाचोयुक्तिरित्यनवद्यम् ॥ ४५ ॥

चन्द्रिका ।

ईश्वरप्रणिधानफलमाह --**समाधीति** ।

ईश्वरे योऽयं भक्तिविशेषस्तस्मात् समाधेराविर्भावो भवति अस्मात् स ईश्वरः प्रसन्नः सन्नन्तरायक्लेशानपहृत्य समाधिमुद्बोधयति ॥ ४५ ॥

योगसुधाकरः ।

**समाधीति** । ईश्वरे अकामनया सकलकर्मसमर्पणात्समाधिसिद्धिः । समाधिश्चित्तस्य समाधानं प्रसाद इति यावत् ॥ ४५ ॥

भोजवृत्तिः ।

यमनियमानुक्त्वाऽऽसनमाह —

**स्थिरसुखमासनम् ॥ ४६ ॥**

आस्यतेऽनेनेत्यासनं पद्मासनदण्डासनस्वस्तिकासनादि । तयदा स्थिरं निष्कम्पं सुखमनुद्वेजनीयं च भवति तदा योगाङ्गतां(१) भजते ॥ ४६ ॥

---

(१) तद्योगाङ्गतामिति पाठान्तरम् ।

भावागणेशवृत्तिः ।

यमनियमाः सिद्धिभिः सहोक्ताः, आसनमुच्यते—स्थिरेति ।

आस्यतेऽनेन प्रकारेणेति व्युत्पत्तेरित्यर्थः । आसनगतविशेषाश्च हठयोगग्रन्थेभ्यो ज्ञेयाः । गुरुभिश्च वार्तिकेऽपि कियन्तः प्रदर्शिताः ॥ ४६ ॥

नागोजीभट्टवृत्तिः ।

आसनमाह—स्थिरसुखमासनम् । यदेव स्थिरं सुखकरं च तदेवासनं कार्यमित्यर्थः ॥ ४६ ॥

मणिप्रभा ।

एवं यमनियमान् सह सिद्धिभिर्निरूप्यासनस्वरूपमाह—स्थिरेति ।

निश्चलं सुखावहं च यदासनं तद्योगाङ्गमित्यर्थः । आस्यतेऽनेनेत्यासनम् । तद् द्विविधं बाह्यं शारीरं च । तत्र चैलाजिनकुशोत्तरं बाह्यं, शारीरं पद्मस्वस्तिकादीति विशेषः । तत्र पद्मासनं प्रसिद्धम् । सव्यमाकुञ्चितचरणं दक्षिणजङ्घोर्वन्तरे; दक्षिणं च सव्यजङ्घोर्वन्तरे निक्षिपेदिति स्वस्तिकासनम् । द्वे पादतले वृषणसमीपे सम्पुटीकृत्य संपुटोपरिपाणिसंपुटिकां न्यसेदिति भद्रासनं द्रष्टव्यम् ॥ ४६ ॥

चन्द्रिका ।

आसनमाह—स्थिरेति ।

आस्यतेऽनेनेत्यासनं पद्मस्वस्तिकादि । तद्यदा स्थिरं निष्कम्पं सुखमनुद्वेजनीयं तदा योगाङ्गम् ॥ ४६ ॥

योगसुधाकरः ।

इत्थं सावान्तरफलान्यमनियमान्निरूप्य क्रमप्राप्तमासनं तत्साधनं तत्फलं च तावदाह—स्थिरेति ।

पद्मस्वस्तिकादिना यादृशेन देहस्थापनेन यस्य पुरुषस्यावयवव्यथानुत्पत्तिलक्षणं सुखं देहचलनराहित्यलक्षणं स्थैर्यं च संपद्यते, तदेव मुख्यमासनम् । पद्मासनादिस्वरूपं तु याज्ञवल्क्येन निरूपितम्-

ऊर्वोरुपरि विप्रेन्द्र ! कृत्वा पादतले शुभे ।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।
पद्मासनं भवेदेतत्सर्वेषामभिपूजितम् ॥

इत्यादिना ॥ ४६ ॥

भोजवृत्तिः ।

तस्यैव स्थिरसुखत्वप्राप्त्यर्थमुपायमाह—

**प्रयत्नशैथिल्यानन्त्य(न्त)समापत्तिभ्याम् ॥ ४७ ॥**

तदासनं प्रयत्नशैथिल्येनाऽऽनन्त्यसमापत्त्या च स्थिरं सुखं भवतीति सम्बन्धः । यदा यदाऽऽसनं बध्नामीतीच्छां करोति प्रयत्नशैथिल्येऽपि अक्लेशेनैव तदा तदाऽऽसनं सम्पद्यते । यदा चाऽऽकाशादिगत आनन्त्ये चेतसः समापत्तिः क्रियतेऽव्यवधानेन(१) तादात्म्यमापद्यते तदा देहाहंकाराभावान्नाऽऽसनं दुःखजनकं भवति । अस्मिंश्चाऽऽसनजये सति समाध्यन्तरायभूता न प्रभवन्ति अङ्गमेजयत्वादयः ॥ ४७ ॥

भावागणेशवृत्तिः ।

आसनस्थैर्यस्योपायमाह—प्रयत्नेति ।

प्रयत्नशैथिल्यं बहुलायासनिवृत्तिः । अनन्तसमापत्तिश्च पृथिवीधारिणि स्थिरतरे शेषनागे चित्तस्य धारणं ताभ्यामासनं निष्पद्यते इत्यर्थः ॥ ४७ ॥

नागोजीभट्टवृत्तिः ।

तत्स्थैर्योपायमाह—प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् । प्रयत्नशैथिल्यं बहुलायासनिवृत्तिः अनन्ते पृथ्वीधारिणि शेषे समापत्तिश्चित्तस्य धारणा ताभ्यामासनं सिध्यतीत्यर्थः ॥ ४७ ॥

---

(१) अवधानेनेति पाठान्तरम् ।

### मणिप्रभा ।

सम्प्रत्यासनस्थैर्योपायमाह—प्रयत्नेति ।

स्वाभाविकः प्रयत्नश्चलत्वादासनविघातकः तस्योपरमेणासनं सिध्यति । येन नाङ्गमेजयो भवति । अनन्ते नागनायके स्थिरतरफणासहस्रविधृतविश्वमण्डले चित्तस्य समापत्त्या देहाभिमानाभावेनासनदुःखास्फूर्तेरासनं सिध्यति ॥ ४७ ॥

### चन्द्रिका ।

उपायमाह—प्रयत्नेति ।

तदासनं प्रयत्नशैथिल्येनाक्लेशेनाकाशगतानन्तसमापत्त्या च स्थिरम् । अनन्तआनन्त्येति पाठद्वये अर्थद्वयम् । प्रथमपाठे शेषसमापत्तिः, द्वितीये आकाशसमापत्तिः ॥ ४७ ॥

### योगसुधाकरः ।

प्रयत्नेति । तस्य च प्रयत्नशैथिल्यं लौकिक उपायः । गमनगृहकृत्यतीर्थस्नानादिविषयो यः प्रयत्नो मानस उत्साहस्तस्य शैथिल्यम् । अन्यथा उत्साहो बलाद्देहमुत्थाप्य यत्र क्वापि प्रेरयति । फणसहस्रेण धरणीं धारयित्वा स्थैर्येणावस्थितो योऽयमनन्तः स एवाहमस्मीति ध्यानं चित्तस्यानन्ते समापत्तिः । तया यथोक्तासनसंपादकमदृष्टं निष्पद्यते । अतस्ताभ्यामासनं सिध्यतीत्यर्थः ॥ ४७ ॥

### भोजवृत्तिः ।

तस्यैवानुनिष्पादितं(१) फलमाह—

## ततो द्वन्द्वानभिघातः ॥ ४८ ॥

तस्मिन्नासनजये सति द्वन्द्वैः शीतोष्णक्षुत्तृष्णादिभिर्योगी नाभिहन्यत इत्यर्थः ॥ ४८ ॥

### भावागणेशवृत्तिः ।

आसनादपि सिद्धिमाह—तत इति ।

तत आसनस्थैर्याद्द्वन्द्वैः शीतोष्णादिभिरनभिघातश्चित्तालम्बनं भवतीत्यर्थः ॥ ४८ ॥

### नागोजीभट्टवृत्तिः ।

आसनसिद्धेः फलमाह—ततो द्वन्द्वानभिघातः । तत आसनस्थैर्यात् । द्वन्द्वं शीतोष्णादि ॥४८॥

### मणिप्रभा ।

तत्सिद्धिलिङ्गमाह—तत इति । आसनजयात् शीतोष्णादिभिरताडनं भवति ॥ ४८ ॥

### चन्द्रिका ।

फलमाह—तत इति । तस्मिन्नासनजये सति योगी द्वन्द्वैः शीतोष्णादिभिर्नाभिहन्यत इति ॥ ४८ ॥

### योगसुधाकरः ।

तत इति । सिद्धे चासने शीतोष्णसुखदुःखमानापमानादिद्वन्द्वैर्यथापूर्वं नाभिहन्यत इत्यर्थः ॥ ४८ ॥

### भोजवृत्तिः ।

आसनजयानन्तरं प्राणायाममाह—

## तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

आसनस्थैर्ये सति तन्निमित्तकः प्राणायामलक्षणो योगाङ्गविशेषोऽनुष्ठेयो भवति । कीदृशः ? श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः । श्वासप्रश्वासौ निरुक्तौ । तयोस्त्रिधा रेचनाक्षेपण(२)पूरणद्वारेण बाह्याभ्यन्तरेषु स्थानेषु गतेः प्रवाहस्य विच्छेदो धारणं प्राणायाम उच्यते ॥ ४९ ॥

### भावागणेशवृत्तिः ।

क्रमप्राप्तं प्राणायामं लक्षयति—तस्मिन्निति ।

---

(१) ऽनुनिष्पादि फलमिति पाठान्तरम् । (२) रेचनस्तम्भनेति पाठान्तरम् ।

तस्मिन्नासने सति श्वासप्रश्वासयोः शास्त्रोक्तरीत्या स्वाभाविकगतिविच्छेदः प्राणायाम इति वक्ष्यमाणचतुर्विधप्राणायामस्य सामान्यलक्षणम् । तत्रासनस्याङ्गत्वलाभाय सत्यन्तम् । श्वासप्रश्वासौ नासापुटेन वायोः प्रवेशनिर्गमौ लोकप्रसिद्धौ तत्काले या स्वाभाविकी गतिस्तत्प्रतिषेध इत्यर्थः । अतो न श्वासप्रश्वासयोर्गत्यनुपपत्तिदोषः ॥ ४९ ॥

## नागोजीभट्टवृत्तिः ।

अथ प्राणायाममाह—तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । तस्मिन्नासने सति नासापुटेन स्वाभाविकौ यौ वायोः प्रवेशनिर्गमौ तत्काले या गतिस्तद्विच्छेद इत्यर्थः ॥ ४९ ॥

## मणिप्रभा ।

सम्प्रत्यासनसाध्यं प्राणायाममाह—तस्मिन्निति ।

आसनस्थैर्ये सति बाह्यकोष्ठ्यवाय्वो रन्तर्बहिर्गतिविच्छेदः प्राणायाम इत्यर्थः ॥ ४९ ॥

## चन्द्रिका ।

तस्मिन्निति । आसनस्थैर्ये सति प्राणायामोऽनुष्ठेयः श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः, विच्छेदो धारणम् ॥ ४९ ॥

## योगसुधाकरः ।

अथासनानन्तरभाविनं प्राणायाममाह—तस्मिन्निति ।

तस्मिन्नासनस्थैर्ये सति प्राणायामः प्रतिष्ठितो भवति । स च श्वासप्रश्वासयोर्गतिविच्छेदरूपः । तत्र श्वासो नाम बाह्यस्य वायोरन्तरानयनम् । प्रश्वासः पुनः कौष्ठ्यस्य वायोर्निःसारणम् । तयोरुभयोरपि संचरणाभावः प्राणायामः । ननु नेदं प्राणायामसामान्यलक्षणम्, तद्विशेषेषु रेचकपूरककुम्भकप्रकारेषु तदनुगतेरयोगादिति चेत् । नैष दोषः । सर्वत्रापि श्वासप्रश्वासयोर्गतिविच्छेदसम्भवात् । तथा हि—कौष्ठ्यस्य वायोर्निर्गमनं रेचकः, यः प्रश्वासरूपः । बाह्यस्य वायोरन्तर्धारणं पूरकः, यः श्वासरूपः । अन्तः स्तम्भवृत्तिः कुम्भकः, यस्मिञ्जलमिव कुम्भे निश्चलतया प्राणाख्यो वायुरवस्थाप्यते तत्र सर्वत्र श्वासप्रश्वासयोर्गतिविच्छेदोऽस्त्येवेति नास्ति शङ्कावकाशः । ननु कुम्भके गत्यभावेऽपि रेचकपूरकयोरुच्छ्वासनिश्वासगती विद्येते इति चेत् । नैष दोषः । अधिकमात्राभ्यासेन स्वभावसिद्धायाः समप्राणगतेर्विच्छेदसम्भवात् ॥ ४९ ॥

## भोजवृत्तिः ।

तस्यैव सुखावगमाय विभज्य स्वरूपं कथयति—

**स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥**

बाह्यवृत्तिः श्वासो रेचकः । अन्तर्वृत्तिः प्रश्वासः पूरकः । आन्तरस्तम्भकवृत्तिः(१) कुम्भकः । तस्मिञ्जलमिव कुम्भे निश्चलतया प्राणा अवस्थाप्यन्त इति कुम्भकः । त्रिविधोऽयं प्राणायामो देशेन कालेन संख्यया चोपलक्षितो दीर्घसूक्ष्मसंज्ञो भवति । देशेनोपलक्षितो यथा—नासाद्वादशान्तादौ । कालेनोपलक्षितो यथा—षट्त्रिंशन्मात्रादिप्रमाणः । संख्ययोपलक्षितो यथा—इयतो वारान्कृत एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातो भवतीति ; एतज्ज्ञानाय संख्याग्रहणमुपात्तम् । उद्घातो नाम नाभिमूलात्प्रेरितस्य वायोः शिरसि अभिहननम् ॥ ५० ॥

## भावागणेशवृत्तिः ।

प्राणायामस्यावान्तरभेदानाह—बाह्येति ।

स च प्राणायामो बाह्यवृत्तिराभ्यन्तरवृत्तिस्तम्भवृत्तिरिति त्रिविधः । रेचकपूरककुम्भकभेदात् सोऽपि

(१) अन्तस्तम्भवृत्तिरिति पाठान्तरम् ।

त्रिविधः । प्राणायामो यदा देशकालसंख्याभिः परिदृष्टो निर्णीतो नियमितो भवति तदाऽभ्यासवशात्क्रमेण दीर्घसूक्ष्मसञ्ज्ञको भवतीति वाक्यार्थः । एतावद्देशेन वा एतावत्कालेन वा एतावन्मात्रासंख्याभिर्वा परिच्छिन्नो मया रेचकादिः कर्तव्यः इत्येवमवधारित इति परिदृष्टान्तविशेषणार्थः । तत्र नासाग्रात्प्रादेशद्वादशाङ्गुलहस्तादिपरिमितो बाह्यदेशो रेचकस्य विषयः, शक्त्यनुसारात् । स च इषीकातूलाक्रियया निश्चेयः । कुम्भकस्य च पूरकदेश एव विषयः । प्रयाणां सहानुष्ठाने पूरकानन्तरमेव कुम्भकस्मरणात् । स तु तूलक्रिययोक्तस्य स्पर्शस्य वानुपलब्ध्या निश्चय इति । क्षणानामियत्तया अवच्छिन्नस्तु रेचकादिः कालदृष्ट उच्यते । संख्यापरिदृष्टश्च यथा—

निमेषोन्मेषणे मात्रा कालो लघ्वक्षरं तथा ।
प्राणायामस्य संज्ञार्थं स्मृतो द्वादशमात्रिकः ॥

इति मार्कण्डेयाद्युक्तमात्राप्रमाणं, ताभिर्द्वादशादिभिर्मात्रासंख्याभिः परिच्छिन्नो रेचकादिरिति । दीर्घसूक्ष्म इति चान्वर्था संज्ञा दीर्घश्चासौ सूक्ष्मश्चेति व्युत्पत्तेः । देशाद्यन्यतमानियमेन हि प्रत्यहमभ्यस्यमानः क्रमेण कालवृद्ध्या दीर्घकालव्यापित्वेन दीर्घ उच्यते, वायुसंचारस्यातिसूक्ष्मतया सूक्ष्म इति ॥ ५० ॥

## नागोजीभट्टवृत्तिः ।

तस्यावान्तरभेदानाह—**बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः** । स प्राणायामो बाह्यवृत्तिराभ्यन्तरवृत्तिस्तम्भवृतिरिति त्रिधा रेचकपूरककुम्भकभेदात् । प्राणिनां दक्षिणा नाडी पिङ्गला नाम सूर्यदैवत्या पितृयोनिः । वामा इडाख्या चन्द्रदैवत्या देवयोनिः । तयोर्मध्ये सुषुम्ना ब्रह्मदैवत्या, तत्र वामनासापुटेनान्तर्वायोस्त्यागो रेचकः । दक्षिणेन बाह्यपूरणं पूरकः । पूरितस्य निगृह्याविमोकः कुम्भकः । याज्ञवल्क्येन पूरककुम्भकरेचक इति क्रम उक्तः । स त्रिविधो देशकालसंख्याभिः परिदृष्टो निर्णीतो भवति तदभ्यासवशाद्दीर्घसूक्ष्मसञ्ज्ञको भवतीत्यर्थः । तत्र रेचकस्य देशो नासिकाद्बहिः प्रादेशः द्वादशाङ्गुलहस्तादिपरिमितः शक्त्यनुसारात् । स चेषीकातूलादिक्रियया निश्चेयः । पूरकस्य चापादतलमस्तकमाभ्यन्तरो देशः स च पिपीलिकास्पर्शसदृशस्पर्शेन निश्चेयः । कुम्भकस्य च पूरकदेश एव विषयः। पूरकानन्तरं तच्छ्रवणात् । स तूलक्रियया उक्तस्पर्शस्य वानुपलब्ध्या निश्चेयः । कालावधृतो यथा—एतावत्कालो रेचक एतावत्क्षणव्यापी पूरक एतावत्कालव्यापी कुम्भक इत्यङ्गीकृतकालैरवधृतः । द्वादशरूपमात्रासंख्यायाः एकैव संख्या त्रिष्वपि मार्कण्डेयोक्ता । मात्रा निमेषोन्मेषपरिच्छिन्नः कालः। स्वजानुमण्डलं त्रिः परामृश्य छोटिकावच्छिन्नकालो मात्रेत्यन्ये । निमेषक्रियावच्छिन्नकालस्य चतुर्थो भावः क्षण इति च । उक्तछोटिकावच्छिन्नः काल एव श्वासप्रश्वासक्रियावच्छिन्नः काल इति च । वसिष्ठेन पूरके षोडश मात्राः कुम्भके चतुःषष्टिमात्राः रेचके द्वात्रिंशन्मात्रा उक्ताः । योगियाज्ञवल्क्येन त्रिष्वपि द्वादशमात्रः कनीयान्, त्रिष्वपि चतुर्विंशतिमात्रो मध्यमः, त्रिष्वपि षट्त्रिंशन्मात्राकालपरिच्छिन्न उत्तम इत्युक्तम् । दीर्घसूक्ष्म इति देशाद्यन्यतमनियमेन प्रत्यहमभ्यस्यमानः क्रमेण कालवृद्ध्या दीर्घकालव्यापित्वाद्दीर्घः, वायुसंचारस्यातिसूक्ष्मतया सूक्ष्मश्च भवतीति बोध्यम् । स च जपध्यानं विना क्रियमाणोऽगर्भ इत्युच्यते । तत्सहितश्च सगर्भ इति । तत्रेश्वरगीतायां सव्याहृतिका सप्रणवा गायत्री सशिरस्का त्रिर्जप्या इत्युक्तम्, त्रिषु एकैकशरामित्यर्थः । प्रणवो जप्य इत्यन्यत्र । तत्र पूरकादिक्रमेण नाभिहृदयललाटेषु ब्रह्मविष्णुशिवानां ध्यानमुक्तं क्वचित् । क्वचित् परब्रह्मण एव५०॥

## मणिप्रभा ।

सामान्यलक्षणमुक्त्वा लक्ष्यं प्राणायामं विभजते—**बाह्येति** ।

प्राणायामश्चतुर्विधः । बाह्यवृत्तिरभ्यन्तरवृत्तिस्तम्भवृत्तिस्तुरीयश्चेति । तत्र कोष्ठ्यस्य वायो रेचनेन बहिर्गतस्य बहिरेव धारणं बाह्यवृत्तिः स च रेचकः । बाह्यवायोः पूरणेनान्तर्गतस्यान्तर्धारणमभ्यन्तरवृत्तिः स च पूरकः । रेचनपूरणप्रयत्नं विना प्राणस्य केवलविधारकप्रयत्नेन गतिविच्छेदः स्तम्भवृत्तिः स च कुम्भकः । नायं रेचकः, अन्तस्थत्वात् । नापि पूरकः, तप्तशिलातलनिहितजलबिन्दुव-

च्छरीरे प्राणस्य संकुचितत्वेन सूक्ष्मत्वात् । यो हि स्थूलोऽन्तर्निरुद्धो देहं पूरयति स पूरकः । तस्माद्रेचकपूरकाभ्यासेन विना सकृत्प्रयत्नमात्रेण सूक्ष्यप्राणस्य कुम्भकशब्दितस्य घटजलवन्निश्चलत्वेन देहेऽवस्थानात्कुम्भकस्तृतीयः सिद्धः । त्रिविधोऽयं प्राणायामो देशकालसंख्याभिर्दीर्घः भूक्ष्म इति परिदृष्टः । तत्र रेचकस्य बाह्यो देशो विषयः प्रादेशवितस्तिहस्तादिपरिमितो निर्वाते नासाग्रे इषीकातूलादिक्रियानुमितः । पूरकादेस्त्वान्तरो देशआपादतलमस्तकं पिपीलिकास्पर्शतुल्येन स्पर्शेनानुमितः । क्षणगणनया ज्ञेयः कालः । मात्रागणनया ज्ञेया संख्या । स्वजानुमण्डलं पाणिना त्रिःपरामृश्य छोटिकाऽवच्छिन्नः कालो मात्रा । सा हि स्वस्थस्य पुंसः श्वासप्रश्वासाभ्यां मिता भवति । तत्र षड्विंशतिमात्राभिरभ्यासक्रमेण दीर्घ इति दृश्यते । अधिकदेशकालव्यापित्वं प्राणनिरोधस्य दीर्घत्वम् । यथा यथा दीर्घ इति निपुणेन दृश्यते तथा तथा प्राणस्य सूक्ष्मत्वेन दर्शनाद्दीर्घ एव सूक्ष्म इति परिदृष्टो भवतीत्यर्थः ॥ ५० ॥

### चन्द्रिका ।

तस्यैव विभज्य रूपं कथयति—**स इति** ।

स तु बाह्यवृत्ती रेचकोऽन्तर्वृत्तिः पूरकोऽन्तःस्तम्भवृत्तिः कुम्भकस्त्रिविधोऽयं देशेन द्वादशाङ्गुलप्रमाणेन कालेन षट्त्रिंशन्मात्रादिना सङ्ख्यया इयतो वारान् कृत इति भेदेनोपलक्षितो दीर्घसूक्ष्मसञ्ज्ञो भवति ॥ ५० ॥

### योगसुधाकरः ।

तमेवाभ्यासमाह —**बाह्येति** ।

रेचको बाह्यवृत्तिः, पूरक आभ्यन्तरवृत्तिः, कुम्भकः स्तम्भवृत्तिः । तत्रैकैको देशादिभिः परीक्षणीयः । तद्यथा—स्वभावसिद्धे रेचके हृदयान्निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्तं श्वासः समाप्यते । अभ्यासेन तु क्रमेण नाभेराधाराद्वा निर्गत्य चतुर्विंशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा समाप्यते । तत्र च रेचकप्रयत्नातिशये सति नाभ्यादिप्रदेशक्षोभेण तन्निश्चेतुं शक्यम् । बहिस्तु सूक्ष्मं तूलं धृत्वा तच्चालनेन निश्चेतव्यम् । सेयं देशपरीक्षा । रेचककाले प्राणस्यावृत्तयो दश विंशतिस्त्रिंशदित्यादिभिः कालपरीक्षा । अस्मिन्मासे प्रतिदिनं दश रेचका आगामिमासे त्रिंशतिरुत्तरमासे त्रिंशादित्यादिभिः संख्यापरीक्षा । एवं पूरकेऽपि योजनीयम् । यद्यपि कुम्भके देशव्याप्तिविशेषो नावगम्यते, तथापि कालसंख्याव्याप्तिरवगम्यत एव । यथा घनीभूतस्तूलपिण्डः प्रसार्यमाणो दीर्घो विरलतया सूक्ष्मश्च भवति, तथा प्राणोऽपि देशकालसंख्याभिरभ्यस्यमानो दीर्घो दुर्लक्ष्यतया सूक्ष्मश्च सम्पद्यत इत्यर्थः॥५०॥

### भोजवृत्तिः ।

त्रीन्प्राणायामानभिधाय चतुर्थमभिधातुमाह—

**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥**

प्राणस्य बाह्यो विषयो नासाद्वादशान्तादिः । आभ्यन्तरो विषयो हृदयनाभिचक्रादिः । तौ द्वौ विषयावाक्षिप्य पर्यालोचयतः(१) स्तम्भरूपो गतिविच्छेदः स चतुर्थः प्राणायामः । तृतीयस्मात्कुम्भकाख्यादयमस्य विशेषः—स बाह्याभ्यन्तरविषयावपर्यालोच्यैव सहसा तप्तोपलनिपतितजलन्यायेन युगपत्स्तम्भवृत्त्या निष्पद्यते । अस्य तु विषयापेक्षको(२) निरोधः । अयमपि पूर्ववद्देशकालसंख्याभिरुपलक्षितो द्रष्टव्यः ॥ ५१ ॥

### भावागणेशवृत्तिः ।

केवलकुम्भकरूपं प्राणायामस्य चतुर्थं विशेषमाह—**बाह्येति** ।

बाह्याभ्यन्तरविषयकौ बाह्याभ्यन्तरवृत्ती पूर्वसूत्रोक्तौ रेचकपूरकौ तयोराक्षेपी अतिक्रमी तावतिक्रम्य

---

(१) पर्यालोच्य यः स्तम्भरूप इति पाठान्तरम् । (२) विषयद्वयाक्षेपक इति पाठान्तरम् ।

स्वयमेव केवलो जायत इति यावत् । स पूर्वसूत्रोक्तरेचकपूरकादित्रयापेक्षया चतुर्थः प्राणायाम इत्यर्थः । तदुक्तं वासिष्ठसंहितायाम्—

प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोऽधमः ।
मध्यमः कम्पनःप्रोक्त उत्थाने चोत्तमो भवेत् ॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसम्भवः ।
निश्वसोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ ॥
तथापि नश्यतस्तेन प्राणायामोत्तमेन हि ।
तयोर्नाशे समर्थः स्यात्कर्तुं केवलकुम्भकम् ॥
रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः ॥
सहितं केवलं वापि कुम्भकं नित्यमभ्यसेत् ।
यावत्केवलसिद्धिः स्यात्तावत्सहितमभ्यसेत् ॥
केवले कुम्भके सिद्धे रेचकपूरकवर्जिते ।
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ॥ इति ॥ ५१ ॥

## नागोजीभट्टवृत्तिः ।

अथ केवलकुम्भकरूपं चतुर्थं भेदमाह—**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः** । बाह्याभ्यन्तरविषयौ उक्तौ रेचकपूरकौ तयोराक्षेपी तावतिक्रम्य जायमानः केवलकुम्भकरूपश्चतुर्थ इत्यर्थः । तदुक्तं वासिष्ठसंहितायां—

प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोऽधमः ।
मध्यमः कम्पकः प्रोक्त उत्थाने चोत्तमो भवेत् ॥
पूर्वंपूर्वं प्रकुर्वीत यावदुत्तरसम्भवः ।
निश्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ ॥
तथापि नश्यतस्तेन प्राणायामोत्तमेन तौ ।
तयोर्नाशे समर्थः स्यात् कर्तुं केवलकुम्भकम् ॥
रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स च केवलकुम्भकः ।
सहितं केवलं वापि कुम्भकं नित्यमभ्यसेत् ।

तपो न परं प्राणायामात्, ततो विशुद्धिर्मलादीनां दीप्तिश्च ज्ञानस्येति भाष्यम् ॥ ५१ ॥

## मणिप्रभा ।

तुरीयं प्राणायमं दर्शयति—**बाह्याभ्यन्तरेति** ।

उक्तो बाह्यो देशो विषयः, आभ्यन्तरविषयश्च हृदयनाभिचक्रादिः, तयोराक्षेपः सूक्ष्मदृष्ट्या पर्यालोचनं स यस्य पूर्वकालेऽस्ति स चतुर्थः स्तम्भवृत्तिः । तस्यापि दीर्घसूक्ष्मत्वं पूर्ववत् । न चास्य कुम्भकान्तर्भावः शङ्कनीयः, रेचकपूरकयोरभ्यासेन जितबाह्याभ्यन्तरविषयनिश्चयं विनैव सकृत्प्रयत्नमात्रेण स्तम्भवृत्तिः कुम्भकः । तन्निश्चयपूर्वकः स्तम्भवृत्तिर्बहुप्रयत्नसाध्यस्तुरीय इति वैलक्षण्यादिति ॥ ५१ ॥

## चन्द्रिका ।

त्रीन् प्राणायामानभिधाय चतुर्थमाह—**बाह्येति** ।

द्वादशान्ताद्बहिर्बाह्यो हृदयादिरान्तरस्तौ द्वावाक्षिप्य पर्यालोचयतः स्तम्भो भूयोगतिविच्छेदः स चतु-

र्थः पूर्वस्मादेतस्य निरोध एव विशेषः(१) ॥ ५१ ॥

**योगसुधाकरः ।**

अथ रेचकादिभ्यस्त्रिभ्योऽन्यं प्रकारमाह—**बाह्येति** ।

यथाशक्ति वायुं विरेच्यानन्तरं क्रियमाणो बहिःकुम्भकः । यथाशक्ति वायुमापूर्यानन्तरं क्रियमाणोऽन्तःकुम्भकः । रेचकपूरकावनादृत्य केवलकुम्भकोऽभ्यस्यमानः पूर्वत्रयापेक्षया चतुर्थो भवति । निद्रातन्द्रादिदोषयुक्तानां रेचकादित्रयम्, तद्रहितानां चतुर्थ इति विवेकः ॥ ५१ ॥

**भोजवृत्तिः ।**

चतुर्विधस्यास्य फलमाह—

**ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥**

ततस्तस्मात्प्राणायामात्प्रकाशस्य चित्तसत्त्वगतस्य यदावरणं क्लेशरूपं तत्क्षीयते विनश्यतीत्यर्थः ५१

**भावागणेशवृत्तिः ।**

योगद्वारभूतां प्राणायामस्य स्थितिसिद्धिमाह द्वाभ्याम् - तत इति ।

ततः प्राणायामस्थैर्यात्प्रकाशस्य विवेकज्ञानस्यावारकं कर्मादृष्टरूपं क्षीयत इत्यर्थः ॥ ५२ ॥

**नागोजीभट्टवृत्तिः ।**

तदेवाह—**ततः क्षीयते प्रकाशावरणम्** । विवेकज्ञानावारकं कर्म प्राणायामस्थैर्यात् क्षीयत इत्यर्थः ॥ ५२ ॥

**मणिप्रभा ।**

सम्प्रति चतुर्विधस्य प्राणायामस्य योगाङ्गत्वे द्वारभूतं फलमाह—**तत इति** ।

प्राणायामाभ्यासात्प्रकाशशीलस्य बुद्धिसत्त्वस्य पिधानं क्लेशपापरूपं क्षीयते । तदुक्तं मनुना सर्वज्ञेन-'प्राणायामैर्दहेद्दोषानि'ति ॥ ५२ ॥

**चन्द्रिका ।**

फलमाह—**तत इति** ।

तस्मात् प्राणायामात् प्रकाश्यचित्तसत्त्वगम्यं यदावरणं क्लेशरूपं तत क्षीयत इत्यर्थः ॥ ५२ ॥

**योगसुधाकरः ।**

अथ प्राणायामफलमाह—**तत इति** ।

प्रकाशस्य सत्त्वस्यावरणं तमो निद्रालस्यादिहेतुः, तस्य चयो भवतीत्यर्थः ॥ ५२ ॥

**भोजवृत्तिः ।**

फलान्तरमाह—

**धारणासु च योग्यता मनसः ॥ ५३ ॥**

धारणा वक्ष्यमाणलक्षणास्तासु प्राणायामैः क्षीणदोषं मनो यत्र यत्र धार्यते तत्र तत्र स्थिरी भवति न विक्षेपं भजते ॥ ५३ ॥

**भावागणेशवृत्तिः ।**

**धारणेति** । प्राणायामस्थैर्यादेव मनसो वक्ष्यमाणधारणासु क्षमता भवति । प्राणाधीनतया मनोव्यापारस्य प्राणस्थैर्येणैव मनःस्थैर्यादित्यर्थः । अत एव वासिष्ठादौ मनःक्षोभेण प्राणक्षोभवत् प्राणक्षोभेणापि मनःक्षोभ उक्तः ॥ ५३ ॥

---

(१) कुम्भकादस्यायं भेदः—स बाह्याभ्यन्तरविषयौ अपर्यालोच्यैव युगपत् स्तम्भवृत्त्या निष्पद्यते अस्य तु विषयद्वयाक्षेपको निरोध इति भोजतदनुयायिनो वदन्ति । बाह्याभ्यन्तरविषयकौ पूर्वोक्तरेचकपूरकौ तयोराक्षेपी अतिक्रमी तौ त्यक्त्वा स्वयमेव केवलो वर्तते इति यावत् एवम्भूतो यः प्राणायामः स चतुर्थ इति सूत्रार्थ इति भावागणेशतदनुगामिनां मतम् ।

### नागोजीभट्टवृत्तिः ।

फलान्तरमाह—धारणासु च योग्यता मनसः । प्राणायामस्थैर्यादेव मनसो वक्ष्यमाणासु धारणासु क्षमता भवति । प्राणाधीनत्वान्मनोव्यापारस्य प्राणस्थैर्येणैव मनःस्थैर्यादित्यर्थः । अत एव वासिष्ठादौ मनःप्राणयोः परस्परक्षोभकतोक्ता ॥ ५३ ॥

### मणिप्रभा ।

धारणास्विति । किञ्च प्राणायावरणक्षये सति मनसः सूक्ष्मलक्ष्यधारणासु योग्यता भवतीत्यर्थः ॥ ५३ ॥

### चन्द्रिका ।

फलान्तरमाह— धारणास्विति ।

वक्ष्यमाणा धारणास्तासु प्राणायामैः क्षीणदोषं मनो यत्र धार्यते तत्र स्थिरं भवति न विक्षेपं भजते ॥

### योगसुधाकरः ।

फलान्तरमाह—धारणेति ।

आधारनाभिचक्रहृदयभ्रूमध्यब्रह्मरन्ध्रादिदेशविशेषे चित्तस्यावस्थानं धारणा । तत्र प्राणायामेन रजोगुणकार्याच्चाञ्चल्यात् तमोगुणकार्यादालस्यादेश्च निवारितं मनो योग्यं भवतीत्यर्थः ॥ ५३ ॥

### भोजवृत्तिः ।

प्रत्याहारस्य लक्षणमाह—

**स्वविषयासम्प्रयोगे चित्त(१)स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥५४॥**

इन्द्रियाणि विषयेभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति प्रत्याहारः । स च कथं निष्पद्यते इत्याह—चक्षुरादीनामिन्द्रियाणां स्वविषयो रूपादिस्तेन सम्प्रयोगस्तदाभिमुख्येन वर्तनं तदभावस्तदाभिमुख्यं परित्यज्य स्वरूपमात्रेऽवस्थानं, तस्मिन्सति चित्तस्वरूपमात्रानुकारीणीन्द्रियाणि भवन्ति । यतश्चित्तमनुवर्तमानानि मधुकरराजमिव मधुमक्षिकाः(२) सर्वाणीन्द्रियाणि प्रतीयन्तेऽतश्चित्तनिरोधे तानि प्रत्याहृतानि भवन्ति । तेषां तत्स्वरूपानुकारः प्रत्याहार उक्तः ॥ ५४ ॥

### भावागणेशवृत्तिः ।

क्रमागतं प्रत्याहारं लक्षयति स्वेति ।

इन्द्रियाणां स्वस्वविषयासंनिकर्षकाले ध्यानादौ या चित्ताकारता भवति सा प्रत्याहार इति फलद्वारकं लक्षणम् । अजितेन्द्रियाणां तु ध्यानादिकाले चित्तमेवेन्द्रियानुकारि भवति । तदानीमपि रूपादिष्विन्द्रियैश्चित्ताकर्षणादिति ॥ ५४ ॥

### नागोजीभट्टवृत्तिः ।

प्रत्याहारमाह—स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः । इन्द्रियाणां स्वस्वविषयासंनिकर्षकाले ध्यानादौ यां चित्ताकाराकारतेव स प्रत्याहार इति फलद्वारकं लक्षणम् । प्राणायामादिभिः स्थिरं चित्तं शब्दादिभिर्विषयैर्न संप्रयुज्यते । तदसंप्रयोगाच्चक्षुरादीन्यपि न संप्रयुज्यन्त इत्ययमिन्द्रियाणां चित्तस्वरूपानुकारः । न तु यत्तत्वे चित्तमभिनिविश्यते तत्रेन्द्रियाणामनुकारस्तस्य तद्विषयत्वादेतदर्थमिवेत्युक्तम् । एवं च सचित्तेन्द्रियाणां निरोधः प्रत्याहार इति फलितम् । अजितेन्द्रियाणां तु ध्यानादिकाले चित्तमेवेन्द्रियानुकारि तदानीमपि रूपादिष्विन्द्रियैश्चित्ताकर्षणादिति दिक् ॥५४॥

### मणिप्रभा ।

उक्तयमादिभिः संस्कृतचित्तस्य प्रत्याहारो भवतीति मत्वा तं लक्षयति—स्वेति ।

---

(१) स्वविषयसम्प्रयोगाभावे चित्तस्येति पाठान्तरम् । इन्द्रियाविषयासम्प्रयोगकाले इन्द्रियाणां चित्तस्वरूपानुकारितेव या भवति सा इन्द्रियाणां प्रत्याहार इत्यर्थः ।

(२) मक्षिका इति पाठान्तरम् ।

शुद्धचित्तस्य शब्दादिभिः स्वविषयैरसम्प्रयोगे सति वैराग्याद्विषयेभ्यो वियुज्य तत्त्वाभिमुखे सतीति यावद्, इन्द्रियाणां चक्षुरादीनां यश्चित्तस्य स्वरूपानुकारः स्वविषयासम्प्रयोगेन तत्त्वाभिमुखरूपः स प्रत्याहारः । इन्द्रियाणि विषयेभ्यः प्रातिलोम्येनाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः । इन्द्रियाणां विषयशूराणां चित्तवत्तत्त्वाभिमुख्यं नास्तीति द्योतनार्थ इवशब्दः । यथा मक्षिका मधुकरराजं चलन्तमनुचलन्ति स्थितमनुस्थिता भवन्ति तथा चित्तानुसारीणीन्द्रियाणि चित्तनिरोधेनैव निरुध्यन्ते न यत्नान्तरेणेति तत्पर्यम् ॥ ५४ ॥

## चन्द्रिका ।

प्रत्याहारमाह—स्वेति ।

इन्द्रियाणां विषयाभिमुख्येन वर्त्तनं यत्तत् परित्यज्य स्वरूपमात्रेऽवस्थानम् । इन्द्रियाणि स्वविषयेभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति प्रत्याहारः, तस्मिन् सति इन्द्रियाणि चित्तरूपमात्रानुकारीणि सन्ति॥५४॥

## योगसुधाकरः ।

अथ क्रमप्राप्तं प्रत्याहारमाह—स्वेति ।

शब्दस्पर्शरूपरसगन्धादिविषयेभ्यो निवर्तिताः श्रोत्रादयश्चित्तस्वरूपमनुकुर्वन्तीवावतिष्ठन्त इत्यर्थः॥५४॥

## भोजवृत्तिः ।

प्रत्याहारफलमाह—

**ततः परमा(१)वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

अभ्यस्यमाने हि प्रत्याहारे तथा वश्यानि आयत्तानीन्द्रियाणि संपद्यते; यथा—बाह्यविषयाभिमुखतां नीयमानान्यपि न यान्तीत्यर्थः ।

तदेवं प्रथमपादोक्त(२)योगस्याङ्गभूतक्लेशतनूकरणफलं क्रियायोगमभिधाय क्लेशानामुद्देशं स्वरूपं कारणं क्षेत्रं फलं चोक्त्वा कर्मणामपि भेदं कारणं स्वरूपं फलं चाभिधाय विपाकस्य स्वरूपं कारणं चाभिहितम् । ततस्त्याज्यत्वात्क्लेशादीनां ज्ञानव्यतिरेकेण त्यागस्याशक्यत्वाज्ज्ञानस्य च शास्त्रायत्तत्वाच्छास्त्रस्य च हेयहानकारणोपादेयोपादानकारणबोधकत्वेन चतुर्व्यूहत्वाद्धेयस्य च हानव्यतिरेकेण स्वरूपानिष्पत्तेर्हानसहितं चतुर्व्यूहं स्वस्वकारणसहितमभिधायोपादानकारणभूताया(३) विवेकख्यातेः कारणभूतानामन्तरङ्गबहिरङ्गभावेन स्थितानां योगाङ्गानां यमादीनां स्वरूपं फलसहितं व्याकृत्याऽऽसनादीनां धारणापर्यन्तानां परस्परमुपकार्योपकारकभावेनावस्थितानामुद्देशमभिधाय प्रत्येकं लक्षणकरणपूर्वकं फलमभिहितम् । तदयं योगो यमनियमाभिः प्राप्तबीजभाव आसनप्राणायामैरङ्कुरितः प्रत्याहारेण कुसुमितो(४) ध्यानधारणासमाधिभिः फलिष्यतीति व्याख्यातः साधनपादः ॥ ५५ ॥

इति श्रीधारेश्वरभोजराजविरचितायां राजमार्तण्डाभिधानायां पातञ्जलयोगसूत्रवृत्तौ साधनाख्यो द्वितीयः पादः ॥ २ ॥

## भावागणेशवृत्तिः ।

योगे व्यापारभूतामेव प्रत्याहारस्य सिद्धिमाह--तत इति ।

ततः प्रत्याहारादिन्द्रियाणां परमो जयो भवति । चित्तास्वातन्त्र्येण वृत्त्यभाव एव परमजय इति॥५५॥

इति श्रीभावागणेशभट्टकृतायां योगदीपिकायां पातञ्जलसूत्रवृत्तौ साधनपादो द्वितीयः ॥ २ ॥

## नागोजीभट्टवृत्तिः ।

तत्सिद्धिं दर्शयति--**ततः परमा वश्यतेन्द्रियाणाम्** । ततः प्रत्याहारात् इन्द्रियाणां परमो जयो भवति । चित्तैकाग्र्यात् स्वस्वविषयकवृत्त्यजनकत्वं भवतीत्यर्थः । विषयाभिमुखं नीयमानान्यपि न

( १ ) परमवा इति पाठान्तरम् । ( २ ) पादोक्तलक्षणस्य योगस्याङ्गेति पाठान्तरम् ।
( ३ ) उपादेयकारणभूताया इति पाठान्तरम् । ( ४ ) पुष्पित इति पाठान्तरम् ।

यान्तीति भावः । यथा तत्तदिन्द्रियनिरोधे पुनरिन्द्रियान्तरजयाय यत्नान्तरमपेक्षितं नैवं चित्तजयोत्तरमपि, तज्जयेनैव सर्वेषां जयादिति शिवम् ॥ ५५ ॥

इति श्रीनागोजिभट्टीयायां पातञ्जलसूत्रवृत्तौ द्वितीयः पादः ॥ २ ॥

## मणिप्रभा ।

प्रत्याहारस्य योगद्वारभूतं फलमाह --तत इति ।

अनिषिद्धविषयसेवाविषये तन्त्रत्वं विना स्वेच्छया भोगः, रागद्वेषाभावे सुखदुःखानुत्पादकं शब्दादिदर्शनमिन्द्रियाणां वश्यता सा न परमा विषयाशीविषयोगात् । या तु विषयैः स्वाभिमुखं नीयमानानामपीन्द्रियाबलानां तत्स्वपातिव्रतात्वेन विषयेष्वत्यन्तमप्रतिपत्तिः, रावणेन स्वाभिमुख्यं नीयमानाया अपि श्रीसीतायाः श्रीरामव्रतत्वेन राक्षसाधमाप्रतिपत्तिवत्सा परमेति जैगीषव्यः ! प्रत्याहारादिन्द्रियाणां परमा वश्यता भवतीत्यर्थः ॥ ५५ ॥

इति साधनपादः समाप्तः ॥ २ ॥

## चन्द्रिका ।

**तत इति** । अभ्यस्यमाने हि प्रत्याहारे तथा वश्यान्यायत्तानीन्द्रियाणि सम्पद्यन्ते यथा बाह्यविषयाभिमुखतां नीयमानान्यपि न यान्तीत्यर्थ । तदेवं पदार्थो यमादिभिः प्रतबीजभाव आसनादिभिरङ्कुरितः प्रत्याहारेण कुसुमितो ध्यानधारणासमाधिभिः फलिष्यतीत्यर्थः ॥ ५५ ॥

इति योगचन्द्रिकायां द्वितीयः साधनपादः ॥ २ ॥

## योगसुधाकरः ।

प्रत्याहारफलमाह—**तत इति** ।

इन्द्रियाणामतिचञ्चलानां परमा वश्यता निश्चलता, विषयेष्वत्यन्तमप्रसर इति यावत् ॥ ५५ ॥

इति श्रीमत्पतञ्जलिप्रणीते योगशास्त्रे योगसुधाकराभिधायां वृत्तौ साधनपादः समाप्तः ॥

इति साधनपादः ।

---

# अथ तृतीयः विभूतिपादः

## भोजवृत्तिः ।

यत्पादपद्मस्मरणादणिमादिविभूतयः ।
भवन्ति भविनामस्तु भूतनाथः स भूतये ॥ १ ॥

तदेवं पूर्वोद्दिष्टं धारणाद्यङ्गत्रयं निर्णेतुं संयमसंज्ञाविधानपूर्वकं(१) बाह्याभ्यन्तरादिसिद्धिप्रतिपादनाय लक्षयितुमुपक्रमते । तत्र धारणायाः स्वरूपमाह—

**(२)देशबन्ध(३)श्चित्तस्य धारणा ॥ १ ॥**

देशे नाभिचक्रनासाग्रादौ चित्तस्य बन्धो(४)विषयान्तरपरिहारेण यत्स्थिरीकरणं सा चित्तस्य धा-

---

(१) विधानपूर्वकमिति पाठान्तरम् ।

(२) पूर्वपादाभ्यां समाधिं तत्साधनं चोक्तवान् । तृतीयपादे तत्प्रवृत्तिहेतवः श्रद्धोत्पादकारणीभूता विभूतयो वक्तव्याः ताश्च विभूतयः संयमादेव भवन्ति । संयमश्च धारणाध्यानसमाधिसमुदाय इति विभूतेः साधनतया पञ्चभ्यो योगाङ्गेभ्योऽस्याङ्गत्रयस्य अन्तरङ्गतया विशेषबोधनायात्र त्रयस्योपन्यासः । तत्रापि धारणादीनां कार्यकारणभावेन नियतपौर्वापर्य्याद् तदनुरोधेन क्रमेण तेषामुपन्यास इति प्रथमं धारणामाह देशेति ।

(३) देशसम्बन्ध इति पाठान्तरम् । (४) चित्तस्य संबंध इति पाठान्तरम् ।

रणोच्यते । अयमर्थः—मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणेन यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्बाधे प्रदेशे ऋजुकायेन जितद्वंद्वेन योगिना नासाग्रादौ संप्रज्ञातस्य समाधेरभ्यासाय चित्तस्य स्थिरीकरणं कर्तव्यमिति ॥ १ ॥

## भावागणेशवृत्तिः ।

योगस्य बहिरङ्गान्येव पञ्च पूर्वपादे व्याख्यातानि । अन्तरङ्गत्रयं तु सिद्धिभिः सहातिबहुलतया पृथक्पादेन व्याख्यायते—देशेति ।

यत्र हृत्पुण्डरीकादिरूपे देशे ध्येयं चिन्तनीयं तत्र देशे चित्तस्य बन्ध ऐकाग्र्यं धारणेत्यर्थः ॥१॥

## नागोजीभट्टवृत्तिः ।

सोऽयं योगो यमनियमाभ्यां प्राप्तबीजो भवति । आसनप्राणायामाभ्यामङ्कुरितः प्रत्याहारेण कुसुमित इत्येतत्पञ्चकं बहिरङ्गम् । धारणादित्रयेण च फलतीति तदन्तरङ्गसाधनम् । तत्र धारणामाह—**देशबन्धश्चित्तस्य धारणा** । यत्र हृत्पुण्डरीकादिदेशे ध्येयं चिन्तनीयं तत्र देशे चित्तस्य बन्ध एकाग्रत्वं धारणेत्यर्थः ।

हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वतमस्तके ।
एवमादिप्रदेशेषु धारणा चित्तबन्धनम् ॥ इत्युक्तेः ।

एवं नासाग्रजिह्वाग्रतात्वादयोऽपि । ननु मूर्त्यादिध्यानादिदेशो घटतां, सत्त्वपुरुषान्यतायोगे शुद्धब्रह्मयोगे वा न देशः संभवति, ध्येयस्यापरिच्छिन्नत्वादिति चेन्न । स्वस्वोपाधिदेशस्यैव तद्देशत्वादित्याहुः । मूर्त्यादिध्यानेन चित्तस्यैकाग्र्ये एव तद्ध्यानमिति तदुपायतयैषा धारणोक्तेत्यन्ये । तत्र धारणा द्वादशप्राणायामकालपरिच्छिन्नेति ईश्वरगीतायाम् ॥ १ ॥

## मणिप्रभा ।

एवं द्वितीयपादे क्लेशतनूकरणद्वारा योगसाधनं क्रियायोगं निरूप्य, सप्रपञ्चं क्लेशकर्मविपाकानुक्त्वा, तेषां हेयत्वार्थं दुःखत्वं दर्शयित्वा, हेयतद्धेतुमोक्षतद्धेतूनुपन्यस्य, योगस्य बहिरङ्गयमादिपञ्चकं सावान्तरफलं निरूपितम् । संप्रति धारणाऽऽदित्रितयमन्तरङ्गं संयमसंज्ञं वदन् संयमसाध्या विभूतयः श्रद्धाद्वारा कैवल्यफलकयोगप्रवृत्तिहेतवो वक्तव्या इति पादान्तरमारभमाणो धारणां लक्षयति—देशबन्ध इति ।

नाभिचक्रहृदयनासाऽग्रादौ देशे सम्प्रज्ञातयोगसिद्धये चित्तस्य यो बन्धः स्थिरीकरणं सा 'धारणे'त्यर्थः । तदुक्तं विष्णुपुराणे —

प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये ॥
मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्पृहम् ।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते ॥
तच्च मूर्तं हरे रूपं यादृक् चिन्त्यं नराधिप ! ।
तच्छ्रूयतामनाधारे धारणा नोपपद्यते ॥
प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलीत्रिभङ्गिना मग्ननाभिना चोदरेण वै ।
प्रलम्बाष्टभुजं विष्णुमथवाऽपि चतुर्भुजम् ॥

समस्थितोरुजङ्घं च सुस्थिराङ्घ्रिकराम्बुजम् ।
चिन्तयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥ इति ॥ १ ॥

### चन्द्रिका ।

धारणामाह—देशेति । देशे नाभिचक्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यद् स्थिरीकरणं सा चित्तस्य धारणेत्युच्यते । यमनियमासनप्राणायामप्रत्याहारासिद्धयुचरं निर्बाधे देशे ऋजुकायेन जितद्वन्द्वेन सम्प्रज्ञातसमाधिरभ्यासाय चेतसः स्थिरीकरणं कर्त्तव्यम् ॥ १ ॥

### योगसुधाकरः ।

यदाराधनतः सिद्धाः सिद्धीरष्टाववाप्नुवन् ।
तमपायतमोभानुमुमापतिमुपास्महे ॥

इत्थं पूर्वस्मिन्पादे समाधिपरिपन्थिक्लेशतनूकरणार्थं समाधिभावनार्थं च पृथक्क्रियायोगं क्लेशतन्मूलकर्मतद्विपाकतत्फलजात्यादीनां दुःखत्वेन हेयत्वं हेयहेतुं तद्धानं कैवल्यं तदुपायभूतां पुरुषख्यातिं तत्साधनं यमादिपञ्चकं बहिरङ्गं च अभिधाय, अथाधुना धारणादित्रयमन्तरङ्गं संयमपदवाच्यं तदवान्तरफलविभूतिजातं च अचिख्यासुः प्रथमं धारणां लक्षयति— देशबन्ध इति ।

आधारादिदेशा अधस्तादभिहिताः । तत्रात्मनि वा चित्तस्य बन्धः स्थापनं धारणेत्युच्यते । तदुक्तं योगियाज्ञवल्क्ये—

यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि ।
धारणेत्युच्यते सद्भिर्योगशास्त्रविशारदैः ॥ इति ॥ १ ॥

### भोजवृत्तिः ।

धारणामभिधाय ध्यानमभिधातुमाह—

## (१)तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

तत्र तस्मिन्प्रदेशे यत्र चित्तं धृतं तत्र प्रत्ययस्य ज्ञानस्य यैकतानता विसदृशपरिणामपरिहारद्वारेण यदेव धारणायामालम्बनीकृतं तदालम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥ २ ॥

### भावागणेशवृत्तिः ।

क्रमागतं ध्यानं लक्षयति —तत्रेति ।

तत्र देशे चतुर्भुजादिध्येयाकारकवृत्तिप्रवाहो ध्यानमित्यर्थः ॥ २ ॥

### नागोजीभट्टवृत्तिः ।

ध्यानमाह—तत्र प्रत्ययैकतानता ध्यानम् । तत्र देशे चतुर्भुजादिध्येयाकारवृत्तिप्रवाहो वृत्त्यन्तराव्यवहितो ध्यानमित्यर्थः । बुद्धिवृत्तौ वा तद्विवेकतश्चैतन्याचिन्तनम् । कारणोपाधावशिवराचिन्तनमिति । द्वादशधारणाकालं च ध्यानम् ॥ २ ॥

### मणिप्रभा ।

धारणासाध्यं ध्यानं लक्षयति—तत्रेति ।

यत्र धारणा विजातीयवृत्तिपरिहारे यत्नापेक्षा भवति तत्रैव या प्रत्ययानां वृत्तीनामेकतानता यत्नमनपेक्ष्यैकविषयता तद्ध्यानमित्यर्थः ।

तद्रूपप्रत्ययैकाग्रसन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ! ॥

इति तत्रैवोक्तं खाण्डिकजनकं प्रति केशिध्वजेन ॥ २ ॥

### चन्द्रिका ।

ध्यानमाह-तत्रेति । त त्रतस्मिन् देशे यत्र चित्तं धृतं तत्र प्रत्ययस्य ज्ञानस्य या एकतानता विसदृशपरि-

---

(१) ध्यानस्य धारणासाध्यत्वात् ध्यानमाह तत्रेति । तत्र तत्प्रत्ययैकतेति पाठान्तरम् ।

णामपरिहारद्वारेण यदेव धारणायामालम्बनीकृतं तदालम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥२॥

### योगसुधाकरः ।

तत्साध्यं ध्यानं लक्षयति— तत्रेति ।

तत्र यथोक्तदेशे प्रत्ययस्यैकतानता एकविषयप्रवाहः, स च विच्छिद्य विच्छिद्य जायमानो ध्यानं भवति । तदुक्तम्—

विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् ।
परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत् ॥ इति ॥ २ ॥

### भोजवृत्तिः ।

चरमं योगाङ्गं समाधिमाह—

**(१)तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥**

तदेवोक्तलक्षणं ध्यानं यथार्थ(२)मात्रानिर्भासमर्थाकारसमावेशादुद्भूतार्थरूपमश्रुतं ज्ञानस्वरूपत्वेन (३) स्वरूपशून्यतामिवाऽऽपद्यते स समाधिरित्युच्यते । सम्यगाधीयत एकाग्रीक्रियते विक्षेपान्परिहृत्य मनो यत्र स समाधिः ॥ ३ ॥

### भावागणेशवृत्तिः ।

समाधिं लक्षयति—तदेवेति ।

मात्रपदस्य विवरणं स्वरूपशून्यमिवेति । स्वरूपपदं च तदादीनामन्येषामप्युपलक्षणम् । इव-शब्देन चाग्रहणमात्रं शून्यसाधर्म्यं विवक्षितम् , स्वरूपतो ध्यानस्य सत्त्वात् । तथा च तदेव ध्यानं तदा ध्येयार्थमात्रग्राहि भवति न तु ध्यातृध्यानध्येयादिविभागं गृह्णाति तदा समाधिरुच्यत इत्यर्थः । तद्विभागग्रहणकाले च ध्यानमिति ध्यानसमाध्योर्भेदः ॥ ३ ॥

### नागोजीभट्टवृत्तिः।

समाधिमाह—तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । मात्रपदविवरणं च स्वरूप-शून्यमिवेति । स्वरूपेति ध्यात्रादीनामप्युपलक्षणम् । इवशब्देनाग्रहणरूपं शून्यसाधर्म्यं विवक्षितम् , स्वरूपतो ध्यानसत्त्वात् । तथाच तदेव ध्यानं यदा ध्येयावेशवशात् ध्यानध्यातृदृष्टिशून्यं ध्येयमात्रा-कारं भवति ध्येयमात्रं गृह्णाति तदा समाधिरित्यर्थः। तद्ग्रहकाले तु ध्यानमिति ध्यानसमाध्योर्भेदः। अत-एवात्यन्ताभ्यर्हितादिविषयेन्द्रियसंनिकर्षे ध्यानभङ्गो भवति न समाधेरिति स्मर्यते। अयं समाधिर्वृत्त्यन्तर-निरोधद्वारैव साक्षात्कारहेतुरिति बोध्यम् ॥ ३ ॥

### मणिप्रभा ।

समाधिं लक्षयति—तदेवेति ।

अतिस्वच्छचित्तवृत्तिप्रवाहरूपं ध्यानमेवार्थमात्रस्वरूपेण निर्भासमानं समाधिः । 'मात्र'चोऽर्थ-माह 'स्वरूपशून्येमिवेति । ध्यानस्वरूपज्ञानशून्यम् । इवशब्देन ध्यानस्य सत्तां द्योतयति । यथा स्वच्छस्फाटिकमणिः कुसुमरूपेणैव निर्भासते न स्वरूपेण तद्वदित्यर्थः । विजातीयवृत्तिविच्छिन्ना धारणा । अविच्छिन्नं ध्यानम् । ध्येयध्यानध्यातृस्फूर्तिमद्ध्येयमात्रस्फूर्तिमान्समाधिः । स एव दीर्घ-कालव्यापी सन् सम्प्रज्ञाताख्यो योग इत्युच्यते । ध्येयस्फूर्तिशून्योऽसम्प्रज्ञात इति भेदः ॥ ३ ॥

### चन्द्रिका ।

समाधिमाह-तदेवेति । तदेव ध्यानं यथार्थमात्रनिर्भासमर्थाकारसमावेशादुद्भूतार्थरूपं न्यग्भूतज्ञान-स्वरूपत्वेन स्वरूपशून्यतामिवापद्यते स समाधिरित्युच्यते । सम्यगाधीयते एकाग्रीक्रियते यत्र मनः स समाधिः ॥ ३ ॥

---

(१) धारणासाध्यं समाधिं लक्षयति तदेवेति । (२) यथार्थेति पाठान्तरम् ।
(३) रूपं न्यग्भूतज्ञानस्वरूपत्वेनेति पाठान्तरम् ।

## योगसुधाकरः ।

ध्यानप्रकर्षात्सन्ततम् एकविषयप्रवाहः समाधिः, तं लक्षयति—तदेवेति ।

तदेव ध्यानमेव ध्येयैकगोचरतया निर्भासमानं ध्यानस्वरूपशून्यामिव स्थितं समाधिर्भवति । तदुक्तम्—

ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ इति ।

नाथाङ्गाङ्गिनोरत्यन्ताभेदः शङ्कनीयः,ईषद्भेदस्य विद्यमानत्वात् । तथाह-कर्तृकरणानुसन्धानपुरःसरं जायमानः प्रत्ययो ध्यानम् । तदुत्कर्षात्कर्तृकरणानुसंधानमन्तरेणैव ध्येयमात्रगोचरतया निर्भासमानः समाधिः । स एवापरवैराग्यपुरःसरमादरनैरन्तर्यदीर्घकालासेवितो निरस्तरजस्तमोलेशमुख्यप्रकाशमय-सत्त्वोद्रेकोदनवद्यवैशारद्यप्रद्योतवरूपश्चिरतरमनुवर्तमानः संप्रज्ञातसमाधिर्भवति । परवैराग्यपूर्वकनि-रोधप्रयत्नेन तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिर्भवति । तदुक्तम्—

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ।
याऽसम्प्रज्ञातनामासौ समाधिरभिधीयते ॥

इत्येष विभागो द्रष्टव्यः ॥ ३ ॥

## भोजवृत्तिः ।

उक्तलक्षणस्य योगाङ्गत्रयस्य व्यवहाराय स्वशास्त्रे तान्त्रिकीं संज्ञां कर्तुमाह—

### (१)त्रयमेकत्र संयमः ॥ ४ ॥

एकस्मिन्विषये धारणाध्यानसमाधित्रयं प्रवर्तमानं संयमसंज्ञया शास्त्रे व्यवह्रियते ॥ ४ ॥

## भावागणेशवृत्तिः ।

धारणादित्रयस्य परिभाषासूत्रम्—तत्त्रयमिति

तद्धारणादित्रयम्, एकैकविषये क्रियमाणं संयम इत्युच्यत इत्यर्थः । संयमसिद्धयोऽग्रे वक्ष्यन्ते ४ ४ ॥

## नागोजीभट्टवृत्तिः ।

एतत्त्रयस्य तान्त्रिकीं संज्ञामाह—तत्त्रयमेकत्र संयमः । एकत्र विषये क्रियमाणमेतत्त्रयं संयम इत्युच्यत इत्यर्थः ॥ ४ ॥

## मणिप्रभा ।

धारणाध्यानसमाधित्रयस्य व्यवहारलाघवफलां संयमसंज्ञामाह— त्रयमिति ।

एकविषयं त्रयं संयमसंज्ञं भवतीत्यर्थः ॥ ४ ॥

## चन्द्रिका ।

योगाङ्गत्रयस्य तान्त्रिकीं सञ्ज्ञामाह—त्रयमिति ।

एकस्मिन् विषये ध्यानधारणासमाधिलक्षणं त्रयं प्रवर्तमानं संयमसञ्ज्ञया शास्त्रे व्यवह्रियते ॥४॥

## योगसुधाकरः ।

इत्थं पूर्वपादोद्दिष्टं धारणादित्रयं व्याख्याय तस्य व्यवहारलाघवाय संयमसंज्ञामाह—त्रयमिति ।

एकविषयं धारणादित्रयं संयमसंज्ञं भवतीत्यर्थः ॥ ४ ॥

## भोजवृत्तिः ।

तस्य फलमाह—

---

(१) तत्त्रयमिति पाठान्तरम् । धारणा ध्यानं समाधिरित्येतत्त्रयं तत्र तत्र प्रयुज्यमानत्वे प्रति-विकल्पशोच्चारणे ग्रन्थगौरवं स्यादतः लाघवार्थं पारिभाषासूत्रमाह त्रयमिति ।

## (१)तज्जयात्प्रज्ञालोकः ॥ ५ ॥

तस्य संयमस्य जयादभ्यासेन सात्म्योत्पादनात्प्रज्ञाया विवेकस्वरूपाया आलोकः(२) प्रसवो भवति। प्रज्ञा ज्ञेयं सम्यगवभासयतीत्यर्थः ॥ ५ ॥

### भावागणेशवृत्तिः ।

इदानीं संयमस्य योगाङ्गताप्रयोजकं द्वारमाह तज्जयादिति ।

तस्य संयमस्य जयः स्थैर्यं तस्मात्प्रज्ञायां: आलोकः दीप्तिः वृद्धिः क्रमेण भवतीत्यर्थः ॥ ५ ॥

### नागोजीभट्टवृत्तिः ।

तस्य योगाङ्गताया द्वारमाह—तज्जयात्प्रज्ञालोकः । तस्य संयमस्य जयात्स्थैर्यात् समाधिप्रज्ञाया आलोकः दीप्ति । दीप्तिः प्रत्ययान्तरानभिभूताया निर्मले प्रवाहेऽवस्थानं भवतीत्यर्थः ॥ ५ ॥

### मणिप्रभा ।

संयमस्य फलमाह—तज्जयादिति ।

तस्य संयमस्य जयात् स्थैर्यात्प्रज्ञायाः समाधिजाया आलोको नैर्मल्यं भवति । भ्रान्तिसंशयादिमलशून्या ध्येयतत्त्वस्फूर्तिर्भवतीत्यर्थः ॥ ५ ॥

### चन्द्रिका ।

तज्जयादिति । तस्य संयमस्य जयादभ्यासेन सात्म्योत्पादनात् प्रज्ञाया ज्ञातव्यविवेकस्वरूपाया आलोकः प्रसरो भवति ॥ ५ ॥

### योगसुधाकरः ।

ततः किम् ? अत आह—तज्जयादिति ।

तस्य संयमस्य जयात्स्थैर्यात्समाधिप्रज्ञाया आलोकः ऋतंभरत्वं भवतीत्यर्थः ॥ ५ ॥

### भोजवृत्तिः ।

तस्योपयोगमाह—

## (३)तस्य भूमिषु विनियोगः ॥ ६ ॥

तस्य संयमस्य भूमिषु स्थूलसूक्ष्मालम्बनभेदेन स्थितासु चित्तवृत्तिषु विनियोगः कर्तव्यः, अधराधरां चित्तभूमिं जितां जितां ज्ञात्वोत्तरस्यां भूमौ संयमः कार्यः । न ह्यनात्मीकृताधरभूमि(४)रुत्तरस्यां भूमौ संयमं कुर्वाणः(५) फलभाग्भवति ॥ ६ ॥

### भावागणेशवृत्तिः ।

संयमस्यानुष्ठाने विशेषमाह—तस्येति ।

तस्य संयमस्य स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मादिषूत्तरोत्तरभूमिकासु नियोजनं योगिना कार्यमित्यर्थः ॥ ६ ॥

### नागोजीभट्टवृत्तिः ।

संयमानुष्ठाने विशेषमाह—तस्य भूमिषु विनियोगः । स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मासूत्तरोत्तरभूमिकासु नियोजनं योगिना कार्यमित्यर्थः । यथा सभूषणसायुधचतुर्भुजमूर्तिसमाधौ सिद्धे आयुधपरित्यागेन तस्यापि सिद्धे भूषणरहिते ततः सोऽहमिति ततोऽहमिति ॥ ६ ॥

---

(१) संयमविजयस्य फलमाह तदिति । (२) विवेकख्यातेरालोक इति पाठान्तरम् ।

(३) कुत्र विनियुक्तस्य संयमस्य फलमेतत् स्यादत आह तस्येति । तस्य संयमस्य जिताया भूमेर्यानन्तरा अजिता भूमिस्तत्र विनियोगः । स्थूलविषये सवितर्कसमाधौ संयमेन वशीकृते अविजिते निर्वितर्के संयमस्य विनियोगः तस्मिंश्च वशीकृते सविचारे तस्मिंश्च वशीकृते निर्विचारे विनियोग इत्यर्थः ।

(४) ह्यसावात्माऽकृताधरभूमिरिति पाठान्तरम् । (५) यमसकुर्वाण इति पाठान्तरम् ।

## मणिप्रभा ।

क्व पुनर्नियुक्तस्य संयमस्येदं फलमिति प्रश्नस्योत्तरं पठति—तस्येति ।

स्थूलसूक्ष्मादिषूक्ताः सवितर्कनिर्वितर्कासविचारानिर्विचाराऽऽदयो भूमयः । तासु संयमस्य विनियोगः । संयमेन पूर्वभूमिं जित्वा तदुत्तरां भूमिं जिगीषेत् । न हि स्थूलमसाक्षात्कृत्य सूक्ष्मं साक्षात्कर्तुं शक्यमिति भावः ॥ ६ ॥

## चन्द्रिका ।

तस्योपयोगमाह—तस्येति ।

तस्य संयमस्य भूमिषु स्थूलसूक्ष्मालम्बनभेदेन स्थितासु चित्तवृत्तिषु विनियोगः कार्यः अधरां जित्वोत्तरां जयेत् ॥ ६ ॥

## योगसुधाकरः ।

ननु क्व विनियुक्तः प्रज्ञालोकः फलं प्रसूत इत्यपेक्षायामाह—तस्येति ।

पूर्वोक्तसवितर्कनिर्वितर्कसविचारनिर्विचारादिभूमिषु संयमस्य विनियोगः कर्त्तव्यः । तत्र विनियुक्तः संयमः पूर्वपूर्वभूमिजयेनोत्तरभूमिर्निर्विचाराभिधाया वैशारद्येऽध्यात्मप्रसादख्यातिमुत्पाद्य सद्भूतार्थप्रद्योतनरूपां समाधिप्रज्ञामुत्पादयतीति तात्पर्यार्थः ॥ ६ ॥

## भोजवृत्तिः ।

साधनपादे योगाङ्गान्यष्टावुद्दिश्य पञ्चानां लक्षणं विधाय त्रयाणां कथं न कृतमित्याशङ्कयाऽऽह—

## (१)त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

पूर्वेभ्यो यमादिभ्यो योगाङ्गेभ्यः पारम्पर्येण समाधेरुपकारकेभ्यो धारणादियोगाङ्गत्रयं संप्रज्ञातस्य समाधेरन्तरङ्गं समाधिस्वरूपनिष्पादनात् ॥ ७ ॥

## भावागणेशवृत्तिः ।

योगाङ्गानि व्याख्यातानि तेष्वावश्यकत्वानावश्यकत्वविवेकार्थमन्तरङ्गबहिरङ्गविभागमाह द्वाभ्याम्—त्रयमिति ।

पूर्वेभ्यः पूर्वपादोक्तपञ्चाङ्गेभ्यः सकाशादेतत्पादोक्तं धारणात्रयं योगस्य संप्रज्ञातस्यान्तरङ्गं भवति । उत्तरसूत्रादत्र संप्रज्ञाताख्याविशेषलाभः ॥ ७ ॥

## नागोजीभट्टवृत्तिः

एवं त्रयाणामत्यावश्यकत्वं प्रतिपादयति—त्रयमन्तरङ्गं पूर्वेभ्यः । पूर्वेभ्यो यमादिपञ्चभ्यः संप्रज्ञातसमाधेरिति शेषः ॥ ७ ॥

## मणिप्रभा ।

ननु योगाङ्गानां मध्येऽङ्गपञ्चकं पूर्वपादे निरूपितं त्रयमत्र निरूपितं तत्र को हेतुरित्यत आह-त्रयमिति ।

पञ्च यमादीनि सम्प्रज्ञातसमाधेः प्रतिबन्धकस्य चित्तकायप्राणेन्द्रियमलस्य निवृत्तिद्वारा बहिरङ्गाणि । धारणादित्रयं त्वाङ्गिनः समानविषयतया साक्षात्स्वरूपोपकारकत्वादन्तरङ्गम् । अतः पूर्वेभ्यः पञ्चभ्य इदमन्तरङ्गमिति कृत्वा तत्तद्भूमिविनियोगोक्त्यर्थमत्र निरूपितामित्यर्थः ॥ ७ ॥

## चन्द्रिका ।

त्रयमिति । पूर्वेभ्यो यमादियोगाङ्गेभ्यः पारम्पर्येण समाधेरुपकारकेभ्यो धारणादि योगाङ्गत्रयं सम्प्रज्ञातस्य समाधेरन्तरङ्गं समाधिस्वरूपनिष्पादनात् ॥ ७ ॥

---

(१) योगाङ्गत्वाविशेषेऽपि संयमस्यैव तत्र तत्र विनियोगः कथं नेतरेषामित्यत आह त्रयमित्यादि । इदं तु साधनत्रयं साध्यसमानविषयत्वेन अन्तरङ्गं यमादयस्तु न तथेति भावः ।

### योगसुधाकरः ।

अत एव संप्रज्ञातसमाधिप्रज्ञाया धारणादित्रयमन्तरङ्गमित्याह— त्रयमिति ।

पूर्वोक्ताः पञ्च यमादयः संप्रज्ञातस्य प्रतिबन्धकप्रत्यवायप्राणादिमलप्रक्षयप्रणाडिकया बहिरङ्गाणि तेभ्याश्चित्तविषयतया सजातीयत्वाद्धारणादित्रयमन्तरङ्गमित्यर्थः ॥ ७ ॥

### भोजवृत्तिः ।

तस्यापि समाध्यन्तरापेक्षया बहिरङ्गत्वमाह—

## तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

निर्बीजस्य निरालम्बनस्य शून्यभावनापरपर्यायस्य समाधेरेतदपि योगाङ्गत्रयं बहिरङ्गं पारम्पर्येणोपकारकत्वात् ॥ ८ ॥

### भावागणेशवृत्तिः ।

तदपीति । निर्बीजयोगस्यासंप्रज्ञातस्य तदपि त्रयं बहिरङ्गमेव भवति । विवेकख्यातिपरवैराग्यद्वारा परम्परयैव तद्धेतुत्वेन जन्मान्तरीयेणापि तत्त्रयेणासंप्रज्ञातसंभवादित्यर्थः ॥ ८ ॥

### नागोजीभट्टवृत्तिः ।

तदपि बहिरङ्गं निर्बीजस्य । तदपि त्रयं निर्बीजस्यासंप्रज्ञातस्य बहिरङ्गमेवेत्यर्थः । विवेकख्यातिपरवैराग्यद्वारा परम्परयैव तद्धेतुत्वेन जन्मान्तरीयेणापि त्रयेणासंप्रज्ञातसंभवादित्यर्थ इति कश्चित् । साध्यसमानविषयत्वेन हि सम्प्रज्ञातं प्रत्यन्तरङ्गत्वम् । अस्य निर्बीजतया तत्त्वमप्यत्र नास्ति । तेषु चिरनिरुद्धेषु परवैराग्यानन्तरमुत्पादाच्च । तदुक्तं भाष्ये 'तदभावेऽभावात्' इत्यन्ये ॥ ८ ॥

### मणिप्रभा ।

तदपीति । असम्प्रज्ञातस्य धारणाऽऽदित्रयमपि बहिरङ्गम् । अङ्गिनो निर्विषयत्वेन त्रयस्य सविषयत्वेन समानविषयत्वाभावात् । अतो व्युत्थानरूपस्य त्रयस्य सम्प्रज्ञातपरिपाकप्रसादरूपपरवैराग्यद्वारा निरोधे सति सम्प्रज्ञातस्यापि निरोधान्निर्बीजो भवति । पारम्पर्येणोपकारकत्वाद्बहिरङ्गमित्यर्थः॥८॥

### चन्द्रिका ।

तस्यापि समाध्यन्तरापेक्षया बहिरङ्गत्वमाह—तदपीति ।

निर्बीजस्य निरालम्बनस्य समाधेस्तदपि योगाङ्गत्रयं बहिरङ्गं पारम्पर्येणोपकारकत्वात् ॥ ८ ॥

### योगसुधाकरः ।

तदप्यसंप्रज्ञातस्यावृत्तिकस्य विजातीयत्वाद्बहिरङ्गमित्याह—तदपीति ।

विजातीयत्वेऽपि संप्रज्ञातप्रज्ञोत्पादनद्वारोपकारितया बहिरङ्गत्वमविरुद्धम् । तदेवोपकारित्वमधस्तादप्यसूत्रकारः—'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' इति ॥ ८ ॥

### भोजवृत्तिः ।

इदानीं योगसिद्धीराख्यातुकामः संयमस्य विषयपरिशुद्धिं कर्तुं क्रमेण परिणामत्रयमाह—

## व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षण(१)चित्तान्वयो निरोधपरिणामः ॥ ९ ॥

व्युत्थानं क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयम् । निरोधः प्रकृष्टसत्त्वस्याङ्गितया चेतसः परिणामः । ताभ्यां व्युत्थाननिरोधाभ्यां यौ जनितौ संस्कारौ तयोर्यथाक्रममभिभवप्रादुर्भावौ यदा भवतः, अभिभवो न्यग्भूततया कार्यकरणासामर्थ्येना(२)वस्थानम्, प्रादुर्भावो वर्तमानेऽध्वनि अभिव्यक्तरूपत-

---

( १ ) निरोधक्षणेति पाठान्तरम् ।
( २ ) कार्यस्य करणेऽप्योसामर्थ्येनेति पाठान्तरम् ।

याऽवस्थानम्(१), तदा निरोधक्षणे चित्तस्योभयवृत्तित्वादन्वयो यः स निरोधपरिणाम उच्यते। अयमर्थः--यदा व्युत्थानसंस्काररूपो धर्मस्तिरोभूतो भवति निरोधसंस्काररूपश्चाऽऽविर्भवति, धर्मिरूपतया च चित्तमुभयत्राग्वयित्वेनाऽवस्थितं(२)प्रतीयते, तदा स निरोधपरिणामशब्देन व्यवह्रियते। चलत्वाद्गुणवृत्तस्य यद्यपि चेतसो निश्चलत्वं नास्ति तथाऽपि एवंभूतः परिणामः स्थैर्यमुच्यते ॥ ९॥

**भावागणेशवृत्तिः।**

ज्ञानोपायप्रसंगेन योगाङ्गानि विस्तरतः प्रोक्तानि। इदानीमङ्गभूतस्य समाधेराङ्गिनोश्च योगयोः स्वरूपभेदावधारणाय तदवस्थासु विशेषा वक्तव्याः। तावतैव तयोरङ्गाङ्गिनोः प्रयोजनमपि प्रतिपादितं भविष्यति। तत्रादावङ्गसमाध्यवस्थातोऽङ्गियोगयोरवस्थाया विशेषमाह—व्युत्थानेति।

व्युत्थानं निरोधश्च योगद्वयसाधारणमेवात्र ग्राह्यम्। केवलस्यासंप्रज्ञातस्य ग्रहणे संप्रज्ञातकालीनपरिणामाकथनान्न्यूनतापत्तेरिति। अभिभवप्रादुर्भावौ च ह्रासवृद्धी। तथाच व्युत्थानसंस्कारस्य ह्रासो वृत्तिनिरोधसंस्कारस्य वृद्धिर्निरोधकालीनः परिणामः। स च निरोधक्षणेष्वेकस्मिन्नेव स्थिरे चित्ते इत्यतश्चित्तस्थैर्यप्रतिपादनाय चित्तपदम्। निरोधस्य प्रतिक्षणमेतादृशपरिणामलाभाय निरोधक्षणेत्युक्तम् ॥ ९॥

**नागोजीभट्टवृत्तिः।**

अथासंप्रज्ञातस्य किं कार्यं तत्र च तस्य कीदृशः परिणामस्तत्राह— **व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः।** संप्रज्ञातोऽप्यत्र व्युत्थानम्। तत्र व्युत्थानकालिकसंस्काररूपेण चित्तस्य परिणामः। सर्वक्षणेषु च निरोध(ल)क्षणस्य तत्स्वरूपस्यैव चित्तस्य तत्रान्वय इत्यर्थः ॥ ९॥

**मणिप्रभा।**

सम्प्रति संयमाद्विभूतिं वक्तुकामः संयमस्य लक्ष्यान् परिणामान् दर्शयति—व्युत्थानेति।

व्युत्थानं संप्रज्ञातः। स निरुध्यते येन तत्परवैराग्यं निरोधः। तत्र यदा व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्य प्रादुर्भावश्च भवतस्तदा निरोधसंस्कारस्यासंप्रज्ञातस्य क्षणेनावसरेण युक्तं चित्तं भवति। तस्य निरोधक्षणस्य चित्तस्य धर्मिणस्त्रिगुणत्वेन चलस्य सदा परिणामशीलस्याभिभूतप्रादुर्भूतयोः संस्कारयोर्धर्मित्वेन योऽन्वयः स निरोधाख्यः परिणाम इत्यर्थः। परवैराग्यरूपवृत्त्या संप्रज्ञातवृत्तेस्तत्संस्कारस्य चाभिभवे सति परवैराग्यसंस्कार एवाभिव्यक्तः सन्निर्बीजनिरोधपरिणाम इति भावः ॥९॥

**चन्द्रिका।**

व्युत्थानेति। व्युत्थानं क्षिप्तादिभूमित्रयं निरोधः प्रकृष्टसत्त्वश्चेतसः परिणामः ताभ्यां जातौ यौ संस्कारौ तयोर्यथाक्रममभिभवप्रादुर्भावौ यदा भवतस्तदा निरोधक्षणे चित्तस्योभयवृत्तित्वादन्वयो यः स निरोधपरिणाम इत्युच्यते ॥ ९॥

**योगसुधाकरः।**

ननु 'तदपि बहिरङ्गं निर्बीजस्य' इत्युक्तम्। कोऽसौ निर्बीजः समाधिरित्यपेक्षायामाह—व्युत्थानेति।

व्युत्थानसंस्काराः समाधिविरोधिनः। ते च निरोधहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं च अभिभूयन्ते, तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति। तथासति निरोध एकैकस्मिन्क्षणे चित्तमनुगच्छति। सोऽयमीदृशश्चित्तस्य निरोधपरिणामो निर्बीजः समाधिर्भवति ॥ ९॥

---

(१) ऽऽविर्भाव इति पाठान्तरम्।

(२) उभयान्वयित्वेऽपि निरोधतयाऽवस्थितमिति पाठान्तरम्।

## भोजवृत्ति

तस्यैव फलमाह—

**(१)तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥**

तस्य चेतसो निरुक्ता(२)न्निरोधसंस्कारात्प्रशान्तवाहिता भवति । परिहृतविक्षेपतया सदृशप्रवाहपारिणामि चित्तं भवतीत्यर्थः ॥ १० ॥

## भावागणेशवृत्तिः।

ननु वृत्तीनामेव स्मृतिहेतुतया संस्कारजनकत्वं सिद्धं निरोधस्य तु संस्कारजनकत्वे किं प्रमाणं तत्राह—तस्येति।

तस्य निरोधस्य प्रशान्तवाहिता निश्चलप्रवाहः स्वसंस्कारादेव भवतीत्यर्थः। निरोधसंस्कारवृद्धेरेवोत्तरोत्तरासंप्रज्ञातव्यक्तीनामाधिकाधिककालं प्रशान्तवाहित्वं युक्तमिति भावः ॥ १० ॥

## नागोजीभट्टवृत्तिः।

ननु वृत्तीनां स्मृत्यन्यथानुपपत्त्या संस्कारजनकत्वेऽपि निरोधस्य संस्कारजनकत्वे न मानमत आह--**तस्य प्रशान्तवाहिता संस्कारात्**। तस्य निरोधस्य प्रशान्तवाहिता व्युत्थानसंस्काररहितचिरकालवाहिता स्वसंस्कारपाटवादेव भवतीत्यर्थः। संस्कारवृद्ध्यैवोत्तरोत्तरसंप्रज्ञातव्यक्तीनामाधिककालतेति भावः ॥ १० ॥

## मणिप्रभा।

सर्वात्मना व्युत्थानसंस्काराभिभवे सति निरोधस्थैर्यमाह—तस्येति।

निरोधसंस्कारप्रचयान्निरस्तसमस्तव्युत्थानसंस्कारमलस्य चित्तस्य निरोधसंस्कारपरम्परामात्रवाहिता भवति। ननु तर्हि चलमेव तदाऽपि चित्तम्, सत्यं तदाऽपि तादृशी परिणाममाला स्थैर्यमित्युच्यत इति भावः ॥ १० ॥

## चन्द्रिका।

तस्येति। तस्य चेतस उक्तान्निरोधसंस्कारात् प्रशान्तवाहिता भवति सदृशप्रवाहपारिणामि चित्तं भवतीत्यर्थः ॥ १० ॥

## योगसुधाकरः।

ननु 'प्रतिक्षणं परिणामिनो हि भावा ऋते चितिशक्तेः' इति न्यायेन चित्तस्य सर्वदा परिणामप्रवाहो वक्तव्यः; तत्र व्युत्थितचित्तस्य वृत्तिप्रवाहः स्फुटः, निरुद्धचित्तस्य तु कथमित्याशङ्क्योत्तरमाह—तस्येति।

यथा समिदाज्याहुतिप्रक्षेपे वह्निरुत्तरोत्तरवृद्ध्या प्रज्वलति, समिदादिप्रक्षये प्रथमक्षणे किंचिच्छाम्यति, उत्तरोत्तरक्षणे शान्तिर्वर्धते, तथा निरुद्धचित्तस्योत्तरोत्तराधिकं प्रशमः प्रवहति। पूर्वपूर्वप्रशमजनितसंस्कार एवोत्तरोत्तरप्रशमस्य कारणमित्यतः प्रशमप्रवाहसंभवान्न कोऽपि दोष इति भावः ॥ १० ॥

## भोजवृत्तिः।

निरोधपरिणाममभिधाय समाधिपरिणाममाह —

**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥**

सर्वार्थता चलत्वान्नानाविधार्थग्रहणं चित्तस्य विक्षेपो धर्मः। एकस्मिन्नेवाऽऽलम्बने सदृशपरिणा-

---

(१) व्युत्थानसंस्काराभिभवे निरोधसंस्कारप्रादुर्भावे च चित्तस्य कीदृशः परिणाम इत्याह तस्येति। व्युत्थानसंस्काररूपमलरहितनिरोधसंस्कारपरम्परामात्रवाहिता प्रशान्तवाहिता।

(२) चेतस उक्तादिति पाठान्तरम्।

युगपदनेकशरीरनिर्मित्सा जायते तदा कुतस्तानि(१) चित्तानि प्रभवन्तीत्याह--

(२)निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगिनः स्वयं निर्मितेषु कायेषु यानि चित्तानि तानि मूलकारणादस्मितामात्रादेव तदिच्छया प्रसरन्ति अग्नेर्विस्फुलिङ्गा इव युगपत्परिणमन्ति ॥ ४ ॥

भावागणेशवृत्तिः।

कायव्यूहदशायां किमेकमेव चित्तमुतानेकमपि भवतीति संशये निर्णयसूत्रे—निर्माणेति।

सिद्धो संकल्पेन निर्मितानि चित्तानि निर्माणचित्तान्युच्यन्ते। तानि बहूनि निर्माणदेहसमसंख्यान्यपि भवन्ति। तेषां कारणमाह अस्मितामात्रादिति। मनःकारणादहङ्कारादित्यर्थः ॥ ४ ॥

नागोजीभट्टवृत्तिः।

यदा योगी कायव्यूहं करोति तदा तावच्छरीरसंबद्धानि चित्तानि किं नाना उतैकमिति संशये आह—निर्माणचित्तान्यस्मितामात्रात्। अस्मितामात्रमहंकारस्तस्मात्सिद्धेन सकल्पेन निर्मित्तानि चित्तानि निर्माणचित्तानि तानि देहसमसंख्यानि भवन्ति। अहंकारकारणकानीत्यर्थः। अन्यथैकाचित्तेन विरुद्धानां भोगसमाध्यादीनां नानादेहेष्वेकदा संभवो न स्यात् ॥ ४ ॥

मणिप्रभा।

ननु यदा योगी युगपद्भोगार्थं बहून्कायान् निर्मिमीते तदा तेषु चित्तानि कुतो भवन्त्यत आह—निर्माणेति।

योगप्रभावान्निर्मीयन्ते इति निर्माणानि चित्तानि योगसङ्कल्पाधीनप्रकृत्यापूरात्कायवदहङ्कारात्प्रकृतेर्जायन्ते इत्यर्थः ॥ ४ ॥

चन्द्रिका।

योगी अनेकशरीराणि युगपत्सृजतीत्याह निर्माणेति। योगिनः स्वयं निर्मितेषु कायेषु यानि चित्तानि तानि मूलकारणादस्मितामात्रात् प्रसरन्ति अग्नेर्विस्फुलिङ्गा इव ॥ ४ ॥

योगसुधाकरः।

यदा योगी युगपद्भोगार्थं बहून्कायान्निर्मिमीते तदा तेषु कस्माच्चित्तानि भवन्तीत्यत आह—निर्माणेति।

योगप्रभावान्निर्मीयन्त इति निर्माणानि चित्तानि योगिसंकल्पाधानप्रकृत्यापूरात्कायवदहंकारात्स्वप्रकृतेर्जायन्ते इत्यर्थः ॥ ४ ॥

भोजवृत्तिः।

ननु बहूनां चित्तानां भिन्नाभिप्रायत्वान्नैककार्यकर्तृत्वं स्यादित्यत आह--

(३)प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

तेषामनेकेषां चेतसां प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तं प्रयोजकं प्रेरकमधिष्ठातृत्वेन,

---

(१) कुतस्त्यानीति पाठान्तरम्।

(२) साक्षात्कृततत्त्वस्य योगिनो यदा युगपत्कर्मफलोपभोगाय युगपदनेकशरीरनिर्माणेच्छा जायते तदा कुतस्तेषु चित्तानि भवन्तीत्यत आह निर्माणेति। निर्माणचित्तानि स्वसङ्कल्पेन निर्मितचित्तानि। अस्मितामात्रात् अहङ्कारादित्यर्थः। ननु निर्मातृचित्तस्य एकस्यैव प्रदीपवद्विसारितया कायव्यूहेषु वृत्तिसम्भवात् किमर्थं देहभेदेनान्तःकरणभेदोऽभ्युपगम्यते। अत्रोच्यते। समाधिभोगयोर्ज्ञानाज्ञानयोश्च एकदा एकस्मिन्नसंभवे विरोधेन चित्तभेदः सिध्यतीति।

(३) ननु कथं बहूनां चित्तानामेकचित्तानुसारिणी प्रवृत्तिरिति। उच्यते। योगी पूर्वसिद्धं यच्चित्तं तदेव सर्वचित्तानां प्रयोजकं करोति ततस्तु तच्चित्ताभिप्रायात् तेषामवान्तरचित्तानां प्रवृत्तिरिति।

तेन न भिन्नमतत्त्वम्। अयमर्थः—यथाऽऽत्मीयशरीरे मनश्चक्षुःपाण्यादीनि यथेच्छं प्रेरयति अधिष्ठातृत्वेन तथा कायान्तरेष्वपीति ॥ ५ ॥

### भावागणेशवृत्तिः।

अनेकनिर्माणे विशेषमाह—**प्रवृत्तीति**।

तेषामनेकेषां निर्माणचित्तानां प्रवृत्तिभेदे प्रतिनियतव्यापारे प्रयोजकमेकं निर्मातृचित्तमेव भवति। निर्मातृचित्तसंकल्पेनैव तेषामखिलव्यापार इत्यर्थः ॥ ५ ॥

### नागोजीभट्टवृत्तिः।

तत्र विशेषमाह—**प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्**। तेषामनेकेषां निर्माणचित्तानां प्रवृत्तिभेदे प्रतिनियतव्यापारे प्रयोजकमेकं चित्तं निर्मिमीते महाराज इव दशाधिकरणमेकं तावशदशाधिकरणमपरम्। ततस्तेषां प्रवृत्तिभेद इति भाष्यसंमतः पन्थाः। केचित्तु निर्मातृचित्तमेव तेषां प्रवृत्तिकारणं निर्मातृचित्तसंकल्पेनैव तेषामखिलव्यापारादित्याहुः ॥ ५ ॥

### मणिप्रभा।

तर्हि चित्तानां भिन्नभिन्नाभिप्रायत्वाद्योगिनो भोगासिद्धिरित्यत आह—**प्रवृत्तीति**।

निर्मितचित्तानां योगी स्वभोगानुकूलप्रवृत्तिविशेषनियामकं चित्तं निर्मिमीत योगबलात्तच्चित्तं तेषां नायकं भवति तेन भोगस्तदनुसन्धानं युज्यत इत्यर्थः ॥ ५ ॥

### चन्द्रिका।

**प्रवृत्तीति**। चेतसां प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तं प्रयोजकमधिष्ठातृत्वेन प्रेरकं तेन न भिन्नं तत्त्वम् ॥ ५ ॥

### योगसुधाकरः।

तर्हि चित्तानां भिन्नाभिप्रायत्वाद्योगिनो भोगासिद्धिरित्यत आह—**प्रवृत्तीति**।

निर्मितचित्तानां नायकं चित्तमेकं योगी स्वभोगानुकूलप्रवृत्तिविशेषनियामकं निर्मिमीते तेन भोगस्तदनुसन्धानं च युज्यते इत्यर्थः ॥ ५ ॥

### भोजवृत्तिः।

जन्मादिप्रभवत्वात्सिद्धीनां चित्तमपि तत्प्रभवं पञ्चविधमेव। ततः(१) जन्मादिप्रभवाच्चित्तात्समाधिप्रभवस्य चित्तस्य वैलक्षण्यमाह—

## तत्र ध्यानजमनाशयम् ॥ ६ ॥

ध्यानजं समाधिजं यच्चित्तं तत्पञ्चसु मध्येऽनाशयं कर्मवासनारहितमित्यर्थः ॥ ६ ॥

### भावागणेशवृत्तिः।

तदेवमुक्तेषु पञ्चसु सिद्धचित्तेषु मध्ये मोक्षयोग्यं चित्तमवधारयति—**तत्रेति**।

तेषु चित्तेषु मध्ये ध्यानजं ध्यानेन समाधिना संस्कृतमेव चित्तमनाशयं निर्वासनं भवति, न मन्त्रादिसंस्कृतमित्यर्थः। समाधिनैव योगजयद्वाराऽखिलवासनोन्मूलनसंभवादिति ॥ ६ ॥

### नागोजीभट्टवृत्तिः।

तत्र पञ्चसु सिद्धिषु मोक्षयोग्यं चित्तमवधारयति—**तत्र ध्यानजमनाशयम्**। तेषु सिद्धचित्तेषु मध्ये ध्यानजं ध्यानेन समाधिना संस्कृतमेव चित्तमनाशयं निर्वासनं भवति, न मन्त्रादिसंस्कृतमित्यर्थः। समाधिनैव योगजयद्वाराऽखिलवासनोन्मूलनसंभवात् ॥ ६ ॥

### मणिप्रभा।

एवं जन्मादिभिः पञ्चविधानि सिद्धचित्तान्युक्तानि तेष्वपवर्गभागीयं चित्तं निर्धारयति—**तत्रेति**।

---

(१) अत इति पाठान्तरम्।

तत्र तेषु जन्मादिजेषु यत्समाधिजं तदनाशयं क्लेशवासनाशून्यं मोक्षयोग्यमित्यर्थः ॥ ६ ॥

## चन्द्रिका ।

जन्मादिभवाच्चित्तात् समाधिप्रभवस्य वैलक्षण्यमाह तत्रेति ।

ध्यानजं समाधिजं यच्चित्तं तज्जन्मजादिषु पञ्चसु मध्ये अनाशयं कर्मवासनारहितमित्यर्थः ॥ ६ ॥

## योगसुधाकरः ।

इत्थं जन्मादिभिः सिद्धिपञ्चकप्रपञ्चनपुरःसरं सिद्धानां पञ्चविधानि चित्तान्यभिहितानि । अधुना तेष्वपवर्गभागीयं चित्तं निर्धारयितुमाह—तत्रेति ।

तत्र तेषु जन्मादिसिद्धचित्तेषु यत्समाधिसिद्धचित्तम्, तदनाशयं क्लेशकर्मविपाकाशयशून्यमपवर्गयोग्यं भवतीत्यर्थः ॥ ६ ॥

## भोजवृत्तिः ।

यथेतरचित्तेभ्यो योगिनश्चित्तं विलक्षणं क्लेशादिरहितं तथा कर्मापि विलक्षणमित्याह—

**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

शुभफलदं कर्म यागादि शुक्लम् । अशुभफलदं ब्रह्महत्यादि कृष्णम् । उभयसंकीर्णं शुक्लकृष्णम् । तत्र शुक्लं कर्म विचक्षणानां दानतपःस्वाध्यायादिमतां पुरुषाणाम् । कृष्णं कर्म नारकिणा(म्)(१) । शुक्लकृष्णं मनुष्याणाम् । योगिनां तु संन्यासवतां त्रिविधकर्मविपरीतं यत्फलत्यागानुसंधानेनैवानुष्ठानान्न किंचित्फलमारभते ॥ ७ ॥

## भावागणेशवृत्तिः ।

इतश्च ध्यानचित्तमेव मोक्षयोग्यमित्याह—कर्मेति ।

योगिनः समाधिसिद्धस्य निष्पन्नयोगस्य क्षीणक्लेशस्य कायादिव्यापाररूपं कर्माशुक्लाकृष्णं पुण्यपापाहेतुर्भवति । क्लेशमूलः कर्माशय इत्युक्तत्वात् । इतरेषां त्वयोगिनां जन्मादिसिद्धानामपि यथासंभवं कर्म त्रिविधं भवति । शुक्लकृष्णयोः प्रत्येकसमुच्चयाभ्यामित्यर्थः । तत्राशुक्लाकृष्णं जीवन्मुक्तानां कर्म अन्तर्यागजपादि हिंसादिदोषासंमिश्रत्वादित्यर्थः । कृष्णं मलिनं कर्म अपेयपानादि । शुक्लकृष्णं च मिश्रितं कर्म बहिर्यागयुद्धादि पशुहिंसादिपापसाङ्कर्यादिति ॥ ७ ॥

## नागोजीभट्टवृत्तिः ।

अतस्तदेव मोक्षयोग्यमित्याह—**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्** । योगिनः समाधिसिद्धस्य निष्पन्नयोगस्य क्षीणक्लेशस्य कायादिव्यापाररूपं कर्माशुक्लकृष्णं पुण्यपापाहेतुरित्युक्तं भवति 'क्लेशमूलः कर्माशय' इत्युक्तेः । इतरेषामप्रयोगिनां जन्मादिसिद्धानामपि त्रिविधं कर्म भवति । शुक्लं कृष्णं शुक्लकृष्णं चेत्येवमित्यर्थः । तत्र शुक्लं कर्मान्तर्यागजपादि हिंसादिदोषासंनिहितत्वात् । कृष्णं मलिनं कर्म (अपेयपानादि) । शुक्लकृष्णं च बहिर्यागयुद्धादि स्वकर्म पशुहिंसादिपापसाङ्कर्यात् । बहिःसाधनसाध्यं सर्वमप्येवमेव । एवं संन्यासिनां क्वचिदपि बहिः साधनसाध्ये कर्मणि अप्रवृत्तानां कृष्णस्याभाव एव योगानुष्ठानसाध्यस्य फलस्येश्वरे समर्पणान्न शुक्लमपीत्यवधेयम् ॥ ७ ॥

## मणिप्रभा ।

योगिनश्चित्तवत्कर्मापि विलक्षणमित्याह—कर्मेति ।

वाङ्मनससाध्यं सुखैकफलकं शुक्लं कर्म स्वाध्यायतपःशीलानां भवति । दुःखैकफलकं कर्म कृष्णं दुरात्मनां भवति । सुखदुःखमिश्रफलकं बहिःसाधनसाध्यं शुक्लकृष्णं सोमयागादिरतानां भवति । तत्र व्रीह्यादिवधेन पिपीलिकाऽऽदिपरिपीडया दाक्षिणादानादिपरानुग्रहेण च योगादिदं त्रिविधं कर्मेतरेषामयोगिनां भवति । योगिनस्तु संन्यासिनो बाह्यसाधनसाध्यकर्मत्यागान्न शुक्लकृष्णं कर्म, क्षीणक्लेशत्वाच्च

---

(१) नारकाणामिति पाठान्तरम् ।

कृष्णं, योगजधर्मस्य फलमनभिध्यायेश्वरार्पितत्वान्न शुक्लं कर्मास्ति, अतश्चित्तशुद्धिविवेकख्यातिद्वारा मोक्षैकफलकमशुक्लाकृष्णं कर्मेत्यर्थः ॥ ७ ॥

## चन्द्रिका ।

कर्मेति । शुभफलदं यागादिकर्म शुक्लमशुभफलदं ब्रह्महत्यादि कृष्णमुभयसङ्कीर्णं शुक्लकृष्णं, तत्र शुक्लं दानादिमतां, कृष्णं नारकिणां, शुक्लकृष्णं मनुष्याणां योगिनां, संन्यासवतामशुक्लकृष्णं क्रियमाणं कर्म फलत्यागानुसन्धानेनानुष्ठानान्न किञ्चित्फलमारभते ॥ ७ ॥

## योगसुधाकरः ।

इत्थमस्तु योगिनश्चित्तम्, तत्कर्म कीदृशमित्यपेक्षायामाह- कर्मेति ।

काम्यकर्म विहितत्वाच्छुक्लम् । निषिद्धं कृष्णम् । मिश्रं शुक्लकृष्णम् । तदेतत्त्रयमितरेषामयोगिनां सम्पद्यते । तच्च त्रिविधं जन्म प्रयच्छति । तदुक्तम्—

शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् ।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥ इति ।

अथ योगस्यानिषिद्धत्वादकृष्णत्वेऽपि विहितत्वाच्छुक्लत्वमेवेति चेत्, मैवम्, अकाम्यत्वाभिप्रायेणाशुक्लकृष्णत्वाभिधानात् । अतश्चित्तशुद्धिविवेकख्यातिद्वारा मोक्षैकफलकमशुक्लकृष्णं योगिनः कर्मेत्यर्थः ॥ ७ ॥

## भोजवृत्तिः ।

अस्यैव कर्मणः फलमाह—

### (१)ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

इह हि द्विविधाः कर्मवासनाः स्मृतिमात्रफला जात्यायुर्भोगफलाश्च । तत्र जात्यायुर्भोगफला एकानेकजन्मभवा इत्यनेन पूर्वमेव कृतनिर्णयाः । यास्तु स्मृतिमात्रफलास्तासु ततः कर्मणो येन कर्मणा यादृक्शरीरमारब्धं देवमनुष्यतिर्यगादिभेदेन तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेवाभिव्यक्तिः(२) वासनानां भवति । अयमर्थः—येन कर्मणा पूर्वं देवतादिशरीरमारब्धं जात्यन्तरशतव्यवधानेन पुनस्तथाविधस्यैव शरीरस्याऽऽरम्भे तदनुरूपा एव स्मृतिफला वासनाः प्रकटीभवन्ति । लोकोत्तरेष्वेवार्थेषु तस्य स्मृत्यादयो जायन्ते । इतरास्तु सत्योऽपि अव्यक्तसञ्ज्ञास्तिष्ठन्ति(३) न तस्यां दशायां नारकादिशरीरोद्भवा(४) वासना व्यक्तिमायान्ति ॥ ८ ॥

## भावागणेशवृत्तिः ।

ननु तिष्ठत्वयोगिनां कर्म, तथापि भोगवासनानभिव्यक्त्यादिना कदाचिन्मोक्षः स्यादिति किमर्थं नियमेन ध्यानजस्यानाशयचित्तस्यापेक्षेत्यत आह—तत इति ।

ततस्त्रिविधात्कर्मणो भोगवासनानामभिव्यक्तिर्भवति । अतः कर्मण्यसति वासनाभिव्यक्त्यभावो न

---

(१) ननु तिष्ठत्वयोगिनां शुक्लादि कर्म तथापि वासनानभिव्यक्त्यादिनापि कदाचिन्मोक्षः स्यादिति किमर्थं ध्यानजस्यानाशयाचित्तस्यापेक्षा इत्यत आह तत इति । ततः त्रिविधात् कर्मणः । तद्विपाकानुगुणानामेवेति । यादृग्जातीयकर्मणो यादृशो विपाकः तादृशस्यानुगुणा या वासनाः कर्मविपाकानुवर्तिन्यः तन्मुखनिरीक्षका इति यावत् । तासामेवाभिव्यक्तिः दैवं कर्म विपच्यमानं दैवानुगुणवासनाभिव्यक्तिजनकं न तिर्यगादिवासनाभिव्यक्तिकारणं भवति । तथा च कर्मणो विद्यमानत्वान्नियतवासनाभिव्यक्तिरयोगिनां भवत्येव ।

(२) तासामेव तस्मादभिव्यक्तिरिति पाठान्तरम् ।

(३) इतरास्तु ताभ्यो न्यग्भूतास्तिष्ठन्तीति पाठान्तरम् ।

(४) शरीरस्योपभोगभवा इति पाठान्तरम् ।

घटते । नन्वेवं मानुष्यप्रापककर्मणापि पश्वादिभोगवासनाभिव्यक्त्या तृणचत्रादिभोजनादौ प्रवृत्त्यापत्ति-रतआह—तद्विपाकानुगुणानामेवेति । स्वविपाकहेतुवासनानामेव कर्मतोऽभिव्यक्तिर्भवति न सर्वासा-मित्यर्थः ॥ ८ ॥

## नागोजीभट्टवृत्तिः ।

नन्वयोगिना कर्मसत्त्वेऽपि भोगवासनानभिव्यक्त्या कदाचिन्मोक्षः स्यादेवेति का ध्यानस्यापेक्षेत्यत आह—ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् । ततस्त्रिविधात्कर्मणो भोगवासनानाम-भिव्यक्तिर्भवत्येवेति न तेषां मोक्षः संभवति । नन्वेवं मानुष्यप्रापककर्मणापि पश्वादिभोगवासनाभिव्य-क्त्या तृणभोजनेऽपि प्रवृत्तिः स्यादत आह तद्विपाकानुगुणानामेवेति । स्वविपाकहेतुवासनानामेव कर्म-तोऽभिव्यक्तिर्न सर्वासामित्यर्थः ॥ ८ ॥

## मणिप्रभा ।

कर्मणः प्रसङ्गाद्वासनाऽभिव्यक्तिफलमाह—तत इति ।

ततस्त्रिविधात्कर्मणो मरणकालानन्तरं जात्यायुर्भोगरूपविपाकदानायाभिव्यक्तौ तस्य विपाकस्यानु-गुणानां वासनानामभिव्यक्तिर्भवति न विरुद्धानामित्यर्थः । देवत्वप्राप्तौ चित्ते प्रसुप्ता एव नरकभोग-वासना भवन्ति तासामभिव्यक्तौ दिव्यभोगायोगादिति भावः ॥ ८ ॥

## चन्द्रिका ।

अस्यैव कर्मणः फलमाह —तत इति ।

द्विविधवासनामध्ये जात्यायुर्भोगफलाः पूर्वं कृतनिर्णयाः । यास्तु स्मृतिफलास्ततः कर्मणो यादृक् शरीरमारब्धं देवादि तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेव तस्मादभिव्यक्तिर्वा-सनानां भवति ॥ ८ ॥

## योगसुधाकरः ।

अधुना प्रसङ्गाद्विपाकाशयाभिव्यक्तेः कर्माभिव्यक्तिनिदानत्वमभिधातुमाह—तत इति ।

ततो यथोदीरितत्रिविधात्मककर्मणोरनन्तरं विपाकदानायाभिव्यक्तौ सत्यां तद्विपाकानुगुणानामेव वासनानामभिव्यक्तिर्भवति, न विरुद्धानामित्यर्थः । देवत्वप्राप्तौ च चित्ते प्रसुप्ता एव नरभोगवासना भवन्ति, तासामभिव्यक्तौ दिव्यभोगायोगादिति भावः ॥ ८ ॥

## भोजवृत्तिः ।

आसामेव वासनानां कार्यकारणभावानुपपत्तिमाशङ्क्य समर्थयितुमाह—

### (१)जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

इह नानायोनिषु भ्रमतां संसारिणां काञ्चियोनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिं प्रतिपद्यते तदा तस्यां पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासना याः प्रकटीभूता आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोहिताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । जातिदेश-कालव्यवधानेऽपि तासां स्वानुरूप(२) स्मृत्यादिफलसाधने आनन्तर्यं नैरन्तर्यम्, कुतः, ? स्मृतिसंस्का-

---

(१) ननु मनुष्यप्रायणानन्तरमधिगतमार्जारभावस्याव्यवहितपूर्वभाविमनुष्यवासनाया एवाभिव्यक्ति-र्युक्ता न तु मार्जारवासनाया न ह्यस्ति सम्भवः यदनन्तरदिवसानुभूतं न स्मर्यते वर्षव्यवहितदिवसानुभूतं च स्मर्यत इत्यत आह जातीति । जात्यादिव्यवहितानामपि वासनानामानन्तर्यमव्यवहितवत्कार्य-कारित्वं भवति अन्यथा कर्मफलानुपपत्तेः स्मृतिसंस्कारयोरेकरूपत्वात् एकरूपत्वमेकाकारत्वम् । तथा च मार्जारविपाकारम्भः स्वव्यञ्जकेनैवाभिव्यक्तेः वर्तमानावस्थो भवति । स च जातिशतादिव्यवधाने-नापि व्यञ्जकं प्राप्य उदियाद व्यवहितानामपि वासनानां सदृशकर्मव्यञ्जकत्वादिति भावः ।

( २ ) स्वानुभूतेति पाठान्तरम् ।

योरेकरूपत्वात् । तथा हि--अनुष्ठीयमानात्कर्मणश्चित्तसत्त्वे वासनारूपः(१) संस्कारः समुत्पद्यते । स च स्वर्गनरकादीनां फलानामङ्कुरीभावः कर्मणां वा यागादीनां शक्तिरूपतयाऽवस्थानम् । कर्तुर्वा तथाविधभोग्य(२)भोक्तृत्वरूपं सामर्थ्यम् । संस्कारात्स्मृतिः स्मृतेश्च सुखदुःखोपभोगस्तदनुभवाच्च पुनरपि संस्कारस्मृत्यादयः । एवं च यस्य स्मृतिसंस्कारादयो भिन्नास्तस्याऽनन्तर्याभावे दुर्लभः कार्यकारणभावः । अस्माकं तु यदाऽनुभव एव संस्कारीभवति संस्कारश्च स्मृतिरूपतया परिणमते तदैकस्यैव चित्तस्यानुसंधातृत्वेन स्थितत्वात्कार्यकारणभावो न दुर्घटः ॥ ९ ॥

भावागणेशवृत्तिः ।

ननु यस्य कर्मणो विपाकानुगुणा वासना बहुजन्मादिव्यवहिता तस्य तदभिव्यञ्जकत्वं न घटते, संनिहितवासनां परित्यज्य व्यवहितवासनाभिव्यक्त्यनौचित्यात्तत्राह—जातीति ।

जात्यादिभिर्जन्मादिभिर्व्यवहितानामपि वासनानामानन्तर्यमव्यवहितवत्कार्यकारित्वं कल्प्यते, स्मृतिसंस्कारयोरेकरूपत्वात् । न हि जातमात्रस्य स्तनपानादीष्टसाधनतादिस्मृतिस्तत्समानाकारवासनां विनोत्पद्यत इत्यर्थः ॥ ९ ॥

नागोजीभट्टवृत्तिः ।

ननु यस्य कर्मणो विपाकानुगुणवासना बहुजन्मादिव्यवहितास्तस्य तदभिव्यञ्जकत्वं घटते संनिहितवासनां परित्यज्य व्यवहितवासनाया अभिव्यक्त्यनौचित्यात् तत्राह—**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्** । जातिर्जन्म । जन्मशतेन दूरदेशतया कल्पशतेन वा व्यवहितानामपि वासनानामानन्तर्यमव्यवहितवत्कार्यकारित्वं कल्प्यते, तदभिव्यक्तिनिमित्तकर्मणस्ता उपादायैव स्वफलारम्भाभिमुखत्वात् । किंच स्मृतिसंस्कारयोरेकत्वात् । नहि जातमात्रस्य स्तनपानादीष्टसाधनतादिस्मृतिस्तत्समानाकारवासनां विनोत्पद्यत इत्यर्थः । देशव्यवधानमवच्छेदकतया बोध्यम् ॥ ९ ॥

मणिप्रभा ।

ननु स्वर्गदेशे देवजन्मनि जातास्तद्भोगेभ्यो वासनाः कथं नरव्याघ्रादिजन्मसहस्रव्यवधानानन्तरं पुनर्देवजन्मन्यभिव्यज्यन्ते, अनन्तरजन्मपूर्ववासना एव पूर्वदिनवासनावत्कुतो न व्यज्यन्त इत्यत आह—जातीति ।

यद्यपि सुप्तोत्थितस्यानन्तरपूर्वदिनानुभवजवासनाः प्रायेणाभिव्यज्यन्तेऽव्यवधानात् तथाऽप्यनादिसंसारे येन कर्मणा यज्जन्मनि भोगैर्वासनाः सञ्चिताः तासां जन्मकोट्या देशेन कल्पशतेन च व्यवहितानामपि तज्जातीयेन कर्मणा तज्जन्मनि पुनः प्राप्ते सति तेनैव कर्मणा जन्मना वाऽभिव्यक्तानामानन्तर्यमव्यवहितत्वं स्मृतिद्वारा भोगादिहेतुत्वमिति यावत् । विजातीयकर्मारब्धानन्तरपूर्वजन्मवासनानां व्यञ्जकाभावात् प्रसुप्तिरेव व्यवहितानामपि कर्मजन्मनोरभिव्यञ्जकयोः सत्त्वादभिव्यक्तिर्युक्ता । न च विजातीयत्वेऽप्यव्यवधानादनन्तरपूर्ववासना एव ताभ्यां स्मृत्याद्यर्थमभिव्यज्यन्तामिति वाच्यम् । स्मृतिसंस्कारयोरेकरूपत्वादयमर्थः क्रिया ज्ञानमन्यद्वा रागादिकं शक्त्यात्मना स्थितः संस्कारः । स च स्वसमानविषयकक्रियास्मृत्यादिहेतुः । क्रियासंस्कारः क्रियात्मना, ज्ञानसंस्कारः स्मृत्यात्मना, अन्यसंस्कारोऽन्यात्मना, परिणमत इति यावत् । एवं स्मृतिसंस्कारयोरभेदेनैकविषयत्वेन चैकरूपत्वात् आनन्तर्यशब्दितः कार्यकारणभावो न विजातीययोः । न हि व्यवधानं संस्कारस्य विरूपकार्यकारित्वमापादयति घटानुभवजसंस्कारादनन्तरमननुभूतस्मृत्यापत्तेरिति ॥ ९ ॥

चन्द्रिका ।

आसां कार्यकारणभावानुपपत्तिं निराकरोति—जातीति ।

इह काञ्चियोनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन तामेव पुनर्योनिं प्रतिपद्यते तदा या वा-

(१) वासनानुरूप इति पाठान्तरम् । (२) तथाविधभोगेति पाठान्तरम् ।

सवाः प्रकटीभूताः आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोभूताः पुनस्तादृक्शरीरलाभे प्रकटीभवन्ति। जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधने आनन्तर्यं नैरन्तर्यं, कुतः? स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

## योगसुधाकरः।

नन्वेता नरभोगवासना देवत्वादिजन्मसहस्रव्यवधानानन्तरं कथं तर्हि पुनर्नरजन्मन्यभिव्यज्यन्त इत्याशङ्क्याह—जातीति।

अनादौ संसारे येन कर्मणा यस्मिञ्जन्मनि भोगैः सञ्चिता या वासनास्तासां जन्मकोट्या स्वर्गादिदेशेन कल्पशतेन च व्यवहितानामपि तज्जातीयेन कर्मणा तस्मिञ्जन्मनि पुनः प्राप्ते सति तेनैव कर्मणा जन्मनामभिव्यक्तानामानन्तर्यं स्मृतिद्वारा भोगादिहेतुत्वं भवति। कुतः? स्मृतिसंस्कारयोरेकरूपत्वात्। क्रिया ज्ञानमन्यद्वा रागादिकं यच्छक्त्यात्मना स्थितं स संस्कारः। तत्र क्रियासंस्कारः क्रियात्मना परिणतः, ज्ञानसंस्कारः स्मृत्यात्मना, अन्यसंस्कारोऽन्यात्मना परिणत इत्येवं स्मृतिसंस्कारयोरभेदेनैकविषयत्वेन चैकरूपत्वादानन्तर्यशब्दितः कार्यकारणभावः सजातीययोः सम्भवति, न विजातीययोः। न हि व्यवधानं संस्कारस्य विरूपकार्यकारित्वमापादयति; तथात्वे घटानुभवजसंस्कारादनन्तरमननुभूतस्मृत्यापत्तेरित्यर्थः ॥ ९ ॥

## भोजवृत्तिः।

भवत्वानन्तर्यं कार्यकारणभावश्च वासनानां यदा तु प्रथममेवानुभवः प्रवर्तते तदा किं वासनानिमित्त उत निर्निमित्त इति शङ्कां व्यपनेतुमाह--

### (१)तासामनादित्वमाशिषो नित्यत्वात् ॥ १० ॥

तासां वासनानामनादित्वं--न विद्यत आदिर्यस्य तस्य भावस्तत्त्वं, तासामादिर्नास्तीत्यर्थः। कुत इत्यत आह—आशिषो नित्यत्वात्। येयमाशीर्महामोहरूपा सदैव सुखसाधनानि मे भूयासुर्मा कदाचन तैर्मे वियोगो भूदिति यः संकल्पविशेषो वासनानां कारणं तस्य नित्यत्वादनादित्वादित्यर्थः। एतदुक्तं भवति—कारणस्य संनिहितत्वादनुभवसंस्कारादीनां कार्याणां प्रवृत्तिः केन वार्यते, अनुभवसंस्काराद्यनुविद्धं संकोचविकाशधर्मि चित्तं तत्तदभिव्यञ्जकविपाकलाभा(२)त् तत्तत्फलरूपतया परिणमत इत्यर्थः ॥ १० ॥

## भावागणेशवृत्तिः।

नन्वेवं सकलजन्मार्थमेव वासनाङ्गीकारेऽनवस्थापत्तिरित्याशङ्कां प्रामाणिकत्वेनापाकरोति—तासामिति।

तासां वासनानां प्रवाहरूपेणानादित्वम्। कुतः? आशिषो नित्यत्वात्। मा न भूवं भूयासमिति स्वविषयकप्रार्थनायाः जातमात्रस्यापि सर्वप्राणिनो नियतत्वादित्यर्थः। इयं हि भवनात्मा प्रार्थना मरणदुःखस्मृत्यैव युक्ता। न चेह जन्मनि मरणदुःखमनुभूतम्। नापि जातमात्रेणानुमितं श्रुतं वा। तस्मात्पूर्वजन्मानुभवोत्था मरणदुःखवासनाऽनुमीयत इति ॥ १० ॥

## नागोजीभट्टवृत्तिः।

ननु सकलजन्मार्थं वासनाङ्गीकारेऽनवस्थापत्तिरत आह—तासामनादित्वं चाशिषो नित्यत्वात्। तासां वासनानां प्रवाहरूपेणानादित्वं, कुत? आशिषो नित्यत्वात्। मा न भूवं भूयासमिति स्वविष-

---

(१) नन्वेवं सकलजन्मसु वासनास्वीकारे अनवस्थाप्रसङ्ग इत्यत आह तासामिति। तासामनादित्वं चाशिषो नित्यत्वादिति पाठः भाष्यादिसम्मतः। अनादित्वं प्रवाहरूपेणेति बोध्यम्। नित्यत्वात् प्रतिजन्मनियतत्वात्। तथा च प्रामाणिकीयमनवस्था न दोषायेत्यभिप्रायः।

(२) व्यञ्जकलाभादिति पाठान्तरम्।

यकप्रार्थनाया जातमात्रस्यापि सर्वप्राणिनो नियतत्वादित्यर्थः । इयं हि भवनात्मा प्रार्थना द्वेषानुबन्धमरणदुःखस्मृत्यैव । नचेह जन्मनि मरणदुःखमनुभूतं नाप्यनुमितं श्रुतं वा, तस्मात्पूर्वजन्मानुभवोत्था मरणवासनानुमीयत इति । दृश्यते हि मातुरङ्कात्प्रस्खलन कम्पमानो बालस्तदुरःसूत्रमतिगाढमालम्बमानः बालस्यायमीदृशः कम्पो भयजन्यः ईदृशकम्पत्वादस्मदादिकम्पवत् । तद्भयं च दुःखद्वेषस्मृतिनिमित्तकं भयत्वादस्मदादिभयवत् । अयं भयजनकः स्खलनादिरनेन दुःखजनकत्वेन ज्ञातः भयजनकत्वात् मद्वत् । इयं स्मृतिः पूर्वानुभवनिबन्धना स्मृतित्वात् मत्स्मृतिवत्, इत्यनुमानम् । एवं स्मितादिष्वनुमितहर्षादयोऽपि प्राग्भववासनाहेतवः । एतेन स्वाभाविकमिदमित्यपास्तम् । अस्मदादानामपि भयस्य तथात्वापत्तेः । पद्मसंकोचविकासावपि न स्वाभाविकौ सूर्यकरसंपर्कस्य विकासं प्रति स्थितिस्थापकाख्यसंस्कारस्य संकोचं प्रति कारणत्वात् । तच्चित्तं मनोरूपं नाणु दीर्घशष्कुलीभक्षणादौ युगपज्ज्ञानपञ्चकोत्पत्तिदर्शनात् । न चाननुभूयमानक्रमस्य कल्पनायां प्रमाणमस्ति । तस्मात् घटप्रासाददीपकल्पसंकोचविकासशालि चित्तं शरीरपरिमाणं; देहप्रदेशवर्तिकार्यदर्शनेन तद्बहिस्तत्सत्त्वे मानाभावात् । मूषकहस्तिदेहयोस्त्वस्य संकोचविकासा उपपद्यन्ते । एवं च आतिवाहिकशरीरसंगेन पूर्वदेहत्यागदेहान्तरसंयोगोपपत्त्या संसारोऽपि युक्तः । अतएव'ङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि'त्यप्युपपन्नमिति केचित् । तन्न । मध्यमपरिमाणत्वे प्रलये नाशापत्तावदृष्टाद्याधारतानुपपत्तेः । तस्मादहंकारस्य गगनमण्डलवत् व्यापित्वेन तत्कार्यचेतसोऽपि विभुत्वमेव । अतएव भाष्ये उक्तं—'वृत्तिरेवास्य विभुनः सङ्कोचविकासशालिनीत्याचार्यः' इति । एवं चानन्तवासनाधारत्वमुपपद्यते । पूर्वसूत्रोक्तवासनानां देशव्यवधानं चोपपन्नम् । अत्र मिश्राः । अनाश्रयस्य देहान्तरसङ्क्राभावे कथमातिवाहिकमाश्रयेत् । तदर्थमपि देहान्तरकल्पनेऽनवस्था । नचास्य निष्कर्षोऽपि सम्भवति । अनिष्कर्षे चेतसाऽसम्बन्धात् तस्याध्यक्षगोचरत्वाभावेन तत्र मानाभावश्च । उत्क्रागमोऽपि पुरुषस्य निष्कर्षमाह । नाहि चित्तं सूक्ष्मशरीरं वा पुरुषः । किन्तु शक्तिरपरिणामिनी । नचास्या निष्कर्षो मुख्यः सम्भवतीति गौणो व्याख्येयः । एवं च चितेः चित्तस्य वा तत्र वृत्त्यभाव एव निष्कर्षः । गमनमपि देशान्तरावच्छेदेन वृत्तिलाभ एव । इन्द्रियाण्यप्यहंकारकार्यत्वात् चित्तसम्बन्धान्येव । प्राणादयस्तु तस्यैव वृत्तिविशेषास्तत्सम्बन्धा एव । एतेन सप्तदशको गण इत्यादेरपि नानुपपत्तिः । एषामपि तत्तद्देशावच्छेदेन सम्बन्ध एव गमनम् । पाशबद्धनयनादिकं त्वर्थवाद इत्याहुः । तदुक्तं—

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतमं विद्धि चिदाकाशं वरानने ! ॥ इति ।

उपपादितं चैतत्प्रागपि । वृत्तिस्त्वस्य धर्माधर्मादिनिमित्तकत्वात्सङ्कोचविकासशालिनीति दिक् ॥१०॥

## मणिप्रभा ।

ननु जन्मान्तरितवासना न सन्तीति वदन्तं चार्वाकं प्रत्याह—तासामिति ।

न केवलं तासां वासनानामानन्त्यं किं त्वनादित्वमपीति चार्थः । कुतः ? सदाऽहं भूयासमित्याशिषो मरणत्रासस्य नित्यत्वात्सर्वजनेष्वव्यभिचारादित्यर्थः । इदमत्राकूतम् । जातमात्रस्य कम्पाद्यनुमितो मरणत्रासो द्वेष्यदुःखस्मृतिमव्यभिचारात्कल्पयति, सा वासनां, सोऽपि मरणजदुःखानुभवं, सोऽपि मरणजदुःखाजनुभवं, सोऽस्मिञ्जन्मन्यसम्भाव्यमानो जन्मान्तरं, कल्पयतीत्यनादित्वसिद्धिरिति । ननु देहस्यानात्मत्वे कस्य जन्ममरणत्रासः आत्मनोऽनाद्यन्तस्योभयत्वादिति चेत्, चित्तस्येति ब्रूमः तस्यैवानादिवासनाऽनुविद्धस्य चित्तस्याहङ्कारिकत्वेन विभुनस्तत्तद्देहसङ्कोचविकासशीलवृत्तिलाभो जन्ममृत्युपरमो मरणं तत्काले दुःखमित्यादिसर्वसंसारः ॥ १० ॥

## चन्द्रिका ।

वासनानां यदा प्रथममेवानुभवस्तदा किं स सनिमित्त उतानिमित्त इति शङ्कामपनयति तासामि-

ति। तासां वासनानामनादित्वं न विद्यते आदिर्यस्य तस्य भावस्तत्त्वं, कुत इत्यत आह आशिषो नित्यत्वात् येयमाशीर्महामोहरूपा सुखसाधनं मे भूयान्न कदाचित्तेन वियोग इत्येवंरूपसङ्कल्पो वासनाकारणं तस्य नित्यत्वात् ॥ १० ॥

## योगसुधाकरः।

ननु जन्मान्तरितवासना न सन्तीति वदन्तं चार्वाकं प्रत्याह—तासामिति।

न केवलं तासां वासनानामानन्तर्यम्, किं त्वनादित्वमपीति चार्थः। 'सदाहं भूयाम्' इत्याशिषो मरणत्रासस्य नित्यत्वात्सर्वजनेष्वव्यभिचारादित्यर्थः ॥ १० ॥

## भोजवृत्तिः।

तासामानन्त्याद्धानं कथं संभवतीत्याशङ्क्य हानोपायमाह—

**हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥**

वासनानामनन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्येति साक्षात्पारम्पर्येण हेतुः। फलं शरीरादि स्मृत्यादि च। आश्रयो बुद्धिसत्त्वम्। आलम्बनं यदेवानुभवस्य तदेव वासनानामतस्तैर्हेतुफलाश्रयालम्बनैरनन्तानामपि वासनानां संगृहीतत्वात्तेषां(१) हेत्वादीनामभावे ज्ञानयोगाभ्यां दग्धबीजत्वे(२) विहिते निर्मूलत्वान्न वासनाः प्ररोहन्ति न कार्यमारभन्त इति तासामभावः ॥ ११ ॥

## भावागणेशवृत्तिः।

इदानीं मोक्षोपपत्तये अनाद्यसंख्यानामपि वासनानामत्यन्तोच्छेद उपपाद्यते हेत्विति।

अखिलवासनानां हेतुरविद्या। यं च पुरुषार्थमुद्दिश्य धर्माद्युत्पद्यते स एव वासनामपि फलम्। कर्मवासनयोरन्योन्यसहकारित्वात्। वासनानामाश्रयस्तु मन आलम्बनं च वासनाभिव्यञ्जकं कामिनीदर्शनादि। सर्वासां वासनानामेतैर्हेत्वादिभिः संगृहीतत्वाद्व्याप्तत्वादेतेषामभावेऽत्यन्तोच्छेदे विदेहमुक्तिसमये तदभावस्तदविनाभूतानां वासनानामत्यन्तोच्छेदो भवतीत्यर्थः। तथाच वासनानामनादित्वेऽपि मोक्ष उपपन्न इति ॥ ११ ॥

## नागोजीभट्टवृत्तिः।

अथ मोक्षोपपत्तयेऽनाद्यसंख्यानामपि वासनानामुच्छेद उपपाद्यते—**हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः।** हेतुरखिलवासनानां पञ्चपर्वाविद्या। फलं तु यमुद्दिश्य धर्माधर्मादि वर्तमानावस्थं भवति स पुरुषार्थः। स एव वासनानामपि फलं कर्मवासनयोरन्योन्यसहकारित्वात्। आश्रयस्तु वासनानां मनः। आलम्बनं च तासां वासनाभिव्यञ्जकं कामिनीदर्शनादि। सर्वासां वासनानां एतैर्हेत्वादिभिः संगृहीतत्वाद्व्याप्तत्वात् एषामभावेऽत्यन्तोच्छेदे विदेहमुक्तिसमये तदभावस्तदविनाभूतवासनानामपि अत्यन्तोच्छेदो भवतीत्यर्थः। एवं च वासनानामनादित्वेऽपि मोक्ष उपपन्नः। नन्वनादित्वमनुच्छेदहेतुः। अनागतत्वे व्यभिचारात्। चैतन्यस्य तु विनाशकारणाभावान्न नाशो न त्वनादित्वादिति भावः ॥ ११ ॥

## मणिप्रभा।

नन्वनादिवासनानां कथमुच्छेदस्तत्राह—हेत्विति।

नैताः पुरुषवदनादयः किं तु कार्या एवं प्रवाहानादयः अतः कारणोच्छेदादुच्छेदसम्भवः। तथा हि पूर्वपूर्वभ्रमसंस्कारलक्षणाविद्याऽहमित्याद्यस्मिताहेतुः। सा च नरोऽहं ममेदमनिष्टमिति भ्रमहेतुः सोऽपि रागद्वेषयोस्तौ च परनिग्रहादिद्वारा धर्माधर्मयोस्तौ च भोगे सोऽपि वासनासु ताः पुनर्भ्रमादिष्वित्यादि चक्रारचक्रमनिशमावर्त्तते। तत्र वासनानां क्लेशकर्माणि हेतवः, देहायुर्भोगाः फलं, चित्तमाश्रयः, शब्दा

---

(१) तेषामिति पाठान्तरम्। (२) बीजकल्पत्वे इति पाठान्तरम्।

दिकमालम्बनम् , एतैः 'संगृहीतत्वादेषां' क्रियायोगाङ्गयोगजाविप्लवविवेकख्यात्या उच्छेदे सति कारणानामभावादुच्छेदो भवतीत्यर्थः ॥ ११ ॥

## चन्द्रिका ।

आसां हानोपायमाह—हेत्विति ।

वासनानामनन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्येति साक्षात्पारम्पर्येण च हेतुः फलं शरीरादि आश्रयो बुद्धिसत्त्वमालम्बनं यदेवानुभवस्य तदेव तैरनन्तानां वासनानां सङ्गृहीतत्वात्तेषामभावे वासनाभावः ॥ ११ ॥

## योगसुधाकरः ।

ननु वासनानामनादितया कथं तदुच्छेदः ? तत्राह—हेत्विति ।

नैताः पुरुषवदनादयः, किं तु कार्या एव प्रवाहानादयः । अतः कारणोच्छेदादुच्छेदः सम्भवति । तथा हि—पूर्वपूर्वसंस्कारलक्षणाविद्या अस्मिताहेतुः । सा च मनुष्योऽहं ममेदमिष्टमनिष्टमिति भ्रमहेतुः । सोऽपि रागद्वेषयोः । तौ च परनिग्रहानुग्रहादिद्वारा धर्माधर्मयोः । तौ च भोगे । सोऽपि वासनासु । ताः पुनर्भ्रमादिषु । इत्यनादि संसारचक्रमनिशमावर्तते । तत्र वासनानां क्लेशकर्माणि हेतवः, जात्यायुर्भोगाः फलम् , चित्तमाश्रयः, शब्दादिकमालम्बनम् ; तैः संगृहीतत्वात् आदरनैरन्तर्यसत्कारानुबन्धयष्टाङ्गयोगजाविप्लवविवेकख्यात्या उच्छेदे सति कारणानामभावादुच्छेदो भवतीत्यर्थः ॥ ११ ॥

## भोजवृत्तिः ।

ननु प्रतिक्षणं चित्तस्य नश्वरत्वात्तरतमत्योपलब्धेः(१)वासनानां तत्फलानां च कार्यकारणभावेन युगपदभावित्वाद्भेदे कथमेकत्वमित्याशङ्क्यैकत्वसमर्थनायाऽऽह—

### (२)अतीतानागतं स्वरूपतोऽस्त्यध्व(३)भेदाद्धर्माणाम्(४) ॥ १२ ॥

इहात्यन्तमसतां भावानामुत्पत्तिर्न युक्तिमती तेषां सत्त्वसम्बन्धायोगात् । न हि शशविषाणादीनां क्वचिदपि सत्त्वसम्बन्धो दृष्टः । निरुपाख्ये च कार्ये किमुद्दिश्य कारणानि प्रवर्तेरन् । न हि विषयमनालोच्य कश्चित्प्रवर्तते । सतामपि विरोधान्नाभावसम्बन्धोऽस्ति । यत्स्वरूपेण लब्धसत्ताकं तत्कथं निरुपाख्यतामभावरूपतां वा भजते न विरुद्धं रूपं स्वीकरोतीत्यर्थः,—तस्मात्सतामभावासम्भवादसतां चोत्पत्त्यसम्भवात्तैस्तैर्धर्मैर्विपरिणममानो धर्मी सदैवैकरूपतयाऽवतिष्ठते । धर्मास्तु त्र्यध्विकत्वेन(५)त्रैकालिकत्वेन व्यवस्थिताः स्वस्मिन्स्वस्मिन्नध्वनि व्यवस्थिता न स्वरूपं त्यजन्ति । वर्तमानेऽध्वनि व्यवस्थिताः केवलं भोग्यतां भजन्ते,—तस्माद्धर्माणामेवातीतानागताद्यध्वभेदस्तेनैव रूपेण कार्यकारणभावोऽभिन्दर्शने प्रतिपाद्यते । तस्मादपवर्गपर्यन्तमेकमेव चित्तं धर्मितयाऽनुवर्तमानं न निह्नोतुं पार्यते ॥१२॥

## भावागणेशवृत्तिः ।

तदेवं चित्तं मोक्षयोग्यं चित्तं तदितरचित्तस्य बन्धप्रकारो वासनोच्छेदासम्भवश्चोक्तः : इतः परं मोक्षकारणविवेकज्ञानाख्यस्य सम्यग्ज्ञानस्य विषयो लक्षणादिकं चातिविस्तरेण प्रतिपादनीयम् । विशेषदर्शिन आत्मभावनाविनिवृत्तिरित्यन्तैः सूत्रैः । ननु द्वितीयपाद एव तत्सर्वमुक्तमिति चेत्सत्यम् । तथापि तेषामेवार्थानां तर्केणात्र परीक्षार्थमनुक्तपूरणार्थं च पुनरारम्भः । तत्रादौ विकाराणां स्वरूपं परीक्ष्यते—अतीतेति ।

---

(१) भेदोपलब्धेरिति पाठान्तरम् ।

(२) ननु सत्कार्यवादिनां मते वासनानामत्यन्तोच्छेदः कथं भवेदत आह अतीतेति । स्यादेष दोषो यदि वयं स्वरूपापायं वासनानां ब्रूमः । नचैवम् किन्तु नासतामुत्पादः सतां वा विनाश इति अतः सतामेव धर्माणामध्वभेदमुदयव्ययात्मकं ब्रूम इति भावः ।

(३) स्वरूपं नास्त्यध्वेति पाठान्तरम् । (४) तद्धर्माणामिति पाठान्तरम् ।

(५) तत्रैव त्र्यधिकत्वेनेति पाठान्तरम् ।

अतीतमनागतं च विकारजातं तदानीमपि वर्तमानावस्थायामिव स्वरूपतोऽस्ति । अभिव्यक्ततयैवासत्त्वात् । एतदेव वेदान्तसूत्रेणाप्युक्तम् । 'असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात्' (२।१।१७) इति । अत्र युक्तिमाह धर्माणामध्वभेदादिति । अनागतवर्तमानातीतरूपावस्थात्रयमध्वशब्देनोच्यते । आसु कार्याणामनुक्षणं सञ्चारात् । तत्र ते धर्माणां कार्याणामवस्थाभेदा अनुभूयमानानां कार्याणां स्वरूपतो नित्यत्वं विना नोपपद्यन्ते । नहि धर्मिण्यसत्यतीतत्वादिधर्मः स्थातुमुत्सहते, अतः कार्यं नित्यमिति ॥ १२ ॥

## नागोजीभट्टवृत्तिः ।

नन्वसतः सम्भवाभावेन सतीनां द्रव्यत्वेन वासनानां कथमुच्छेदः सतो विनाशाभावादत आह--**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्** । भविष्यदभिव्यक्तिकमनागतमनुभूताभिव्यक्तिकमतीतम् । एतदुभयावस्थायामपि विकारजातं स्वव्यापारोपारूढस्वरूपवर्तमानावस्थायामिव स्वरूपतोऽस्ति अभिव्यक्ततयैवासत्त्वम् । तत्र हेतुमाह धर्माणामध्वभेदात् । अनागतवर्तमानातीतरूपावस्थात्रयमध्वशब्दवाच्यम् । आसु कार्याणामनुक्षणं सञ्चारात् तत्र ते धर्माणां कार्याणामवस्थाभेदा अनुभूयमानाः कार्याणां स्वरूपतः सत्त्वमनुमापयन्ति । नहि धार्मिणि असति अतीतत्वादिधर्मः स्थातुमुत्सहते अभिव्यक्तिरपि सूक्ष्मरूपेण विद्यमानैव तदभिव्यक्तितो नातिरिक्तेति नानवस्था ॥ १२ ॥

## मणिप्रभा ।

ननु सतां संस्काराणां कथमभाव इत्यत आह--**अतीतेति** ।

नासतामुत्पादो न सतां विनाशः "नासतो विद्यते भावो नाभावो विद्यते सत" इति परमेश्वरगीताश्रुतेः । "वेदाहं समतीतानि वर्त्तमानानि चार्जुन !, भविष्याणि च भूतानी"ति वर्तमानवदतीतानागतस्य प्रत्यक्षवेद्यत्वोक्तेश्च न ह्यसतः प्रत्यक्षवेद्यत्वं सम्भवति तस्मादतीतानागतं धर्मजातं धार्मिणि शक्तिरूपेणास्त्येव यत्पारिणामत्रयसंयमादिना योगिनः साक्षीत्कुर्वन्ति कुलालादयश्च बुद्ध्यावालिख्य कुर्वन्ति यदाऽन्वयी धर्मी स्थिर एक उक्तः । ननु तर्हि वासनाऽऽदिबन्धसत्त्वात्तत्त्वज्ञानवैयर्थ्यमिति चेन्न । धर्माणामनागताद्यध्वनां भेदाद्वर्तमानाध्वनि हि दुःखादिवासनाचित्रं साधिकारमसंख्येयपरिणामशीलं चित्तं भोग्यताऽऽपन्नं बन्ध उच्यते । तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रकृत्यात्मना सदपि पुनरुत्थानबीजस्य कर्तव्यपुरुषार्थस्य कृतत्वान्न पुनरावर्तत इत्यर्थः ॥ १२ ॥

## चन्द्रिका ।

**अतीतेति** । सतामभावासम्भवादसतां चोत्पत्त्यसम्भवात्तैर्धर्मैर्विपरिणममानो धर्मी एकरूपो धर्मास्त्वनेके, तस्माद्धर्माणामतीतानागताद्यध्वभेदस्तस्मादपवर्गपर्यन्तमेकमेव चित्तं धर्मि ॥ १२ ॥

## योगसुधाकरः ।

नन्वास्तां तावदासां वासनानामुच्छेदः; किमुत्पत्तिरसतीनां सतीनां वा ? न तावदाद्यः, असम्भवात्; न ह्यसतः शशविषाणस्य सास्ति; नापि द्वितीयः, असम्भवादेव; न हि सद्रूपायाश्चितिशक्तेरुत्पत्तिः सम्भवति येन तथा स्यादित्याशङ्क्य शक्तिरूपेण स्वप्रकृतौ विद्यमानानामेषामभिव्यक्तिरुत्पत्तिरित्याशयेनाह—**अतीतेति** ।

अतीतानागतं धर्मजातं धर्मिणि शक्तिरूपेणास्त्येव । अतस्तस्याभिव्यक्तिपदवेदनीयोत्पत्तिरुपपद्यते । ननु तर्हि वासनादिबन्धस्य विद्यमानत्वात्तत्त्वज्ञानवैयर्थ्यमिति चेत्, न; धर्माणामनागताद्यध्वनां भेदात् । वर्तमानाध्वनि दुःखादिवासनाचित्रं साधिकारमसंख्येयपरिणामशीलं चित्तं भोग्यतामापन्नं बन्ध इत्युच्यते । तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रकृत्यात्मना सदपि पुनर्व्युत्थानबीजस्य कर्तव्यपुरुषार्थस्य कृतत्वान्न पुनरावर्तत इत्यर्थः ॥ १२ ॥

## भोजवृत्तिः ।

त एते धर्मधर्मिणः किंरूपा इत्यत आह--

**ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥**

य एते धर्मधर्मिणः प्रोक्तास्ते व्यक्तसूक्ष्मभेदेन व्यवस्थिता गुणाः सत्त्वरजस्तमोरूपास्तदात्मानस्तत्स्वभावास्तत्परिणामरूपा इत्यर्थः। यतः सत्त्वरजस्तमोभिः सुखदुःखमोहरूपैः सर्वासां बाह्याभ्यन्तरभेदभिन्नानां भावव्यक्तीनामन्वयानुगमो दृश्यते। यद्यदन्वयि तत्तत्परिणामरूपं(२) दृष्टं, यथा-घटादयो मृदन्विता मृत्परिणामरूपाः ॥ १३ ॥

## भावागणेशवृत्तिः।

कार्यस्वरूपं परीक्ष्य सदसत्त्ववैधर्म्येण तद्विवेकतः कारणं परीक्ष्यते--त इति।

ते कार्यरूपा धर्मा अभिव्यक्ता अनभिव्यक्ता वा भवन्तु सर्व एव सर्वदैव गुणात्मानस्तत्त्वतः सत्त्वादिगुणत्रयस्वरूपा भवन्ति। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्॥' इति श्रुतेः।

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥

इति भाष्यकारावधृतवाक्यादिभ्यश्चेत्यर्थः। अयं भावः। रूप्यते अवगम्यते अनेन रूपेणेति रूपमुच्यते। अतः कार्यं कारणं चेति कार्यस्यैव रूपद्वयम्। तत्र कार्यरूपताऽऽद्यन्तयोर्न तिष्ठति कार्यरूपेणानवगमात्। कारणरूपता तु कालत्रयेऽप्यव्यभिचारिणी। सर्वदैव कारणरूपेणावगमात्। अतः कार्यरूपापेक्षया कारणरूपमेव पारमार्थिकं रूपं कार्याणामिति। अत्र कार्यस्यात्यन्तमसत्त्वं न विवक्षितम्। पूर्वसूत्रे कार्यनित्यतावचनादिति। एतेन 'मायामात्रं जगदि'ति श्रुतिस्मृतिप्रवादोऽपि व्याख्यातः। मिथ्यारचनाहेतौ व्यामोहकशक्तावेव मायाशब्दनयोगादिति ॥ १३ ॥

## नागोजीभट्टवृत्तिः।

अथ कार्याणां मूलकारणमाह—ते व्यक्तसूक्ष्मा गुणात्मानः। ते कार्यरूपा धर्मा व्यक्ताः अभिव्यक्ताः सूक्ष्माः अनभिव्यक्ता वा भवन्तु सर्वे सर्वदा गुणात्मानः सत्त्वादिगुणत्रयरूपा भवन्ति। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः।

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥

इति वाक्याच्च। मायेव नतु माया सा हि झटिति नश्यति तद्वदिमे विकाराः, प्रकृतिस्तु तद्वैधर्म्यात्परमार्थरूपेति तदर्थः॥ नन्वेकस्मात्प्रधानात्कथं कार्यवैचित्र्यमिति चेत्तदाहितानादिक्लेशवशानुगताद्वैचित्र्यादिति गृहाण। सर्वोऽपि दृश्यपदार्थो गुणानां संस्थानभेदवान् परिणामः वस्तुतो गुणरूप एव। एवञ्च कार्यकारणात्मकं कार्यस्य रूपद्वयं कार्यरूपताद्यन्तयोर्नास्ति कारणरूपता तु सर्वदा। अतस्तत्कार्याणां परमार्थिकं रूपम्। एतेन मायामात्रं जगदिति प्रवादोऽपि व्याख्यातः। आद्यन्तयोरनुपलभ्यमानत्वेन मिथ्यारचनाहेतौ व्यामोहकशक्तावेव मायापदप्रयोगादिति दिक् ॥ १३ ॥

## मणिप्रभा।

अतीतानागतं स्वरूपतोऽस्तीत्युक्तं तत्र किं स्वरूपमित्यत आह--त इति।

व्यक्ता वर्तमानाध्वानः, सूक्ष्मा अतीतानागताध्वानः, ते महदादयो घटादिविशेषान्ताः गुणात्मानः सत्त्वरजस्तमःस्वरूपा इत्यर्थः। सर्वे भावाः सुखदुःखमोहात्मकगुणान्वितत्वेन तत्प्रकृतित्वात्तत्स्वरूपा एव यथा घटादयो मृदान्विताः मृत्स्वरूपाः प्रकृतिविकारयोर्भेदाभेदरूपतादात्म्यात्। तत्र गुणाः परिणामिनित्याः। अन्ये सर्वे भावाः प्रतिक्षणपरिणामाः क्षणविध्वंसिनः। पुरुषस्तु कूटस्थः। तदुक्तं भाष्ये—

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकत्॥ इति।

ऐन्द्रजालिकवत्क्षणविध्वंसीत्यर्थः ॥ १३ ॥

---

(२) परिणामिरूपमिति पाठान्तरम्।

### चन्द्रिका ।

त इति । धर्मधर्मिणो व्यक्तसूक्ष्मसत्त्वादिगुणपरिणामरूपाः ॥ १३ ॥

### योगसुधाकरः ।

ननु स्वरूपतोऽस्तीत्युक्तम् ; किं तत्स्वरूपमित्यत्राह—त इति ।

व्यक्ता वर्तमानाध्वानः, सूक्ष्मा अतीतानागताध्वानः; ते महदादयो घटादिविशेषान्ता गुणात्मानः सत्त्वरजस्तमःस्वरूपास्तत्प्रकृतिकत्वादित्यर्थः ॥ १३ ॥

### भोजवृत्तिः ।

यद्येवं यदा गुणाः सर्वत्र मूलकारणं कथमेको धर्मीति व्यपदेश इत्याशङ्क्याऽऽह—

## (१)परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥

यद्यपि त्रयो गुणास्तथाऽपि तेषामङ्गाङ्गिभावगमनलक्षणो यः परिणामः क्वचित्सत्त्वमङ्गि क्वचिद्रजः क्वचिच्च तम इत्येवंरूपस्तस्यैकत्वाद्वस्तुनस्तत्त्वमेकत्वमुच्यते । यथेयं—पृथिवी, अयं वायुरित्यादि ॥ १४ ॥

### भावागणेशवृत्तिः ।

ननु यदि सर्वे विकारास्तत्त्वतोऽनेकगुणमात्रास्तर्हि कथमेकं शब्दतन्मात्रमेकं चक्षुरित्यादिलौकशास्त्रीयो व्यवहार इति, तत्राह—परिणामेति ।

परिणामैकत्वाद्वस्तूनां तत्त्वमेकत्वम् । तथाच परमार्थतो नानात्वेऽपि व्यावहारिकपरिणामरूपेणैकत्वमित्यर्थः ॥ १४ ॥

### नागोजीभट्टवृत्तिः ।

ननु सर्वेषामनेकगुणरूपत्वे कथं एकं शब्दतन्मात्रमेकं चक्षुरित्यादिव्यवहारोऽत आह—परिणामैकत्वाद्वस्तुतत्त्वम् । परिणामैकत्वाद्वस्तूनां तत्त्वमेकत्वं परमार्थतो नानात्वमेव त्रिगुणात्मकत्वात् । परिणामैकत्वं एकजातीयपरिणाम इत्यर्थः । तेन तन्मात्रादीनां प्रत्येकमनेकव्यक्तिभिः कृतेऽपि न क्षतिः । तत्र सत्त्वप्राधान्येन करणरूपः परिणामः । तमःप्राधान्येन विषयरूपः परिणामः । यत्तु विज्ञानवादी न्ययोऽर्थो न विज्ञानाद्भिन्नस्तेन सहैवोपलम्भात् यद्यद् येन नियमतः सहोपलभ्यते तत्तेनाभिन्नं यथैकस्माच्चन्द्राद्भिन्न(२)श्चन्द्रः। तेन वेदनाच्च । यद्येन वेद्यते तत्ततो न भिद्यते यथा ज्ञानं, एवमभेदे सिद्धे बोध्यं भिन्नवत्प्रतिभासितं सविकल्पज्ञानपरिकल्पितः स्वप्नवदिति प्रधानकल्पना व्यर्थेति वदति । तत्र प्रत्यभिज्ञाविरोधाद्यत्न ॥ १४ ॥

### मणिप्रभा ।

ननु यदि त्रयो गुणाः परिणामिनः तर्हि परिणामानां प्रत्येकमेकत्वं न स्यात् न हि मृत्तन्तुदुग्धानामेकः परिणामो दृष्ट इत्यत आह—परिणामेति ।

बहूनामप्येकः परिणामो दृष्टः यथा रुमास्थले क्षितानां गजाश्वादीनामेको लवणपरिणामः वर्त्तितैलाग्नीनामेको दीपपरिणामः, मृदादीनां त्वङ्गाङ्गित्वाभावान्न परिणामैकत्वम् । गुणानां तु परिणामस्या-

---

(१) यदि सर्वे विकारा अनेकगुणमात्राः तदा कथमेकं शब्दतन्मात्रमेकं चक्षुरिति लोकशास्त्रीयो व्यवहार इत्याशङ्कायामाह परिणामेति । परिणामस्य एकत्वाद्वस्तूनां गुणानां तत्त्वमेकत्वं परमार्थतो नानात्वेऽपि व्यावहारिकेण परिणामरूपेण वस्तूनां गुणानामेकत्वव्यवहारः । अत एव "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यद् कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यमि"ति श्रुतिः व्यावहारिकस्य अग्न्यादवयविनः एकस्य अवयवविभागे सति नानात्वमेव पारमार्थिकमुक्तवती । तथा च यथा वर्त्तितैलानलानां परिणाम एकः प्रदीप एव गुणानां परिणामैकत्वं तदैक्याच्च गुणानामैक्यं व्यावहारिकैक्यमिति भावः ।

(२) द्वितीय इत्यर्थः ।

ङ्गाङ्गिभावस्यैकत्वाद्वस्तुनो महदादेस्तत्त्वमेकत्वं युज्यते । तत्र सत्त्वस्याङ्गित्वे गुणत्रयादेको महान् तस्मादेकस्माद्रजःप्रधानादहङ्कारः, तमःप्रधानात्पञ्च तन्मात्राणि प्रत्येकमेकत्ववन्ति भवन्ति, अहङ्कारात्सात्त्विकाद्बुद्धीन्द्रियाणि, राजसात्कर्मेन्द्रियाणि, उभयात्मकान्मनः । एवं शब्दतन्मात्रस्याङ्गित्वे सत्याकाशः पञ्चतन्मात्राणामेकः परिणामः । एवं स्पर्शरूपरसगन्धतन्मात्राणां क्रमेणाङ्गित्वे वाय्वग्न्यम्ब्ववनयः प्रत्येकं जायन्ते । एकस्माद्बहवः परिणामास्तु बहुपरिणामवासनारूपशक्तिवैचित्र्यादित्यलं विस्तरेण१४

चन्द्रिका ।

धर्म्यैकत्वमाह —परिणामेति । यद्यपि गुणास्त्रयस्तथापि तेषामङ्गाङ्गित्वाद्वस्तुनस्तत्त्वमेकत्वम् । यथेष्टं पृथिवीत्वादिवत् ॥ १४ ॥

योगसुधाकरः ।

ननु महदादीनां गुणत्रयपरिणामत्वेन प्रत्येकमेकत्वं न स्यादित्याशङ्क्याह —परिणामेति ।

दृश्यते हि बहूनामेकः परिणामः, यथा तैलवर्त्तिवह्नीनामेकः प्रदीपपरिणामः । न च तर्हि मृत्सुवर्णक्षीराणामेकः परिणामः स्यादिति वाच्यम्; तेषामङ्गाङ्गिभावाभावात् । गुणानां त्वङ्गाङ्गिभावेन तत्परिणामस्यैकत्वाद्वस्तुनो महदादेस्तत्त्वमेकत्वं युज्यत इत्यर्थः ॥ १४ ॥

भोजवृत्तिः ।

ननु च ज्ञानव्यतिरिक्ते सत्यर्थे वस्त्वेकमनेकं वा वक्तुं युज्यते, यदा विज्ञानमेव वासनावशात्कार्यकारणभावेनावस्थितं तथा तथा प्रतिभाति तदा कथमेतच्छक्यते वक्तुमित्याशङ्क्याऽऽह—

**(१)वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः(२) ॥ १५ ॥**

**नचैकचित्ततन्त्रं वस्तु तत्प्रमाणकं तदा किं स्यात् ॥ १६ ॥**

तयोर्ज्ञानार्थयोः(३) विविक्तः पन्था विविक्तो मार्ग इति(४) यावत् । कथं? वस्तुसाम्ये चित्तभेदात् । समाने वस्तुनि स्त्र्यादावुपलभ्यमाने(५) नानाप्रमातॄणां चित्तस्य भेदः सुखदुःखमोहरूपतया समुपलभ्यते । तथाहि—एकस्यां रूपलावण्यवत्यां योषिति उपलभ्यमानायां सरागस्य सुखमुत्पद्यते सपत्न्यास्तु द्वेषः परिव्राजकादेर्घृणेत्येकस्मिन्वस्तुनि नानाविधचित्तोदयात्कथं चित्तकार्यत्वं वस्तुन एक-

---

(१) ननु विज्ञानातिरिक्तवस्तुसद्भावे परिणामादिकल्पना न च तानि विज्ञानातिरिक्तानि सन्ति तथा हि जड़रूपस्यार्थस्य स्वयमप्रकाशतया नास्त्यर्थो विज्ञानासम्बन्धी विज्ञानं तु स्वयंप्रकाशत्वात् स्वगोचरास्तिताव्यवहारे जड़ापेक्षाभावात् अर्थासम्बन्ध्यपि तस्माद्विज्ञानातिरिक्तस्य नास्ति सत्तेत्ययं च प्रयोगः । यद् येन ज्ञानेन वेद्यते न तत्ततो भिद्यते यथा ज्ञानस्यात्मा वेद्यन्ते च भूतादीनि तस्माद्भिन्नानीत्यादि विज्ञानवादिमतं दूषयति वस्तुसाम्य इति । वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्था इति पाठः भाष्यादिसम्मतः । अयमभिप्रायः । यज्ज्ञानात्वेऽपि यस्यैकत्वं तत्ततोऽत्यन्तभिन्नं यथैकं चैत्रज्ञानं नानाभूतमैत्रादिज्ञानेभ्यो भिन्नं, दृश्यते च ज्ञाननानात्वेऽप्यर्थस्यैकत्वं तस्मादर्थो ज्ञानेभ्यो भिन्नः । नन्वर्थस्यैकत्वं कुतोऽवसीयत इति चेत्, प्रमातॄणां ज्ञानभेदेपि परस्परप्रतिसन्धानादिति ब्रूमः । प्रतिसन्धीयते हि यैव स्त्री त्वया दृश्यते सैव मयापीति प्रमातृभिः । तस्मात् वस्तुसाम्ये चित्तवृत्तीनां भेदात् नानात्वात् तयोः ज्ञानविषययोः विविक्तः पन्थाः स्वरूपभेदोपाय इति ।

(२) अत्र "न चैकं चित्ततन्त्रं वस्तु तत्प्रमाणकं तदा किं स्यादि" त्येकमधिकं सूत्रं विज्ञानभिक्षुमतेन भावागणेश–नागोजीभट्ट–प्रभाकरादिभिर्व्याख्यातम्, वाचस्पतिना तु तदेतदुत्सूत्रं दूषयति भाष्यकार इत्यनेन प्रक्रान्तम् । चन्द्रिकायां भोजराजेनापि न व्याख्यातमिति द्रष्टव्यम् ।

(३) ज्ञानज्ञेययो रिति पाठान्तरम् ।

(४) मार्गदेश इतीति पाठान्तरम् । (५) माने लावण्यादाविति पाठान्तरम् ।

चित्तकार्यत्वे वस्त्वेकरूपतयैवावभासेत। किं च चित्तकार्यत्वे वस्तुनो यदीयस्य चित्तस्य तद्वस्तु कार्यं तस्मिन्नर्थान्तरव्यासक्ते तद्वस्तु न किञ्चित्स्यात्। भवत्विति चेन्न तदेव कथमन्यैर्बहुभिरुपलभ्यते, उपलभ्येत च। तस्मान्न चित्तकार्यम्। अथ युगपद्बहुभिः सोऽर्थः क्रियते, तदा बहुभिर्निर्मितस्यार्थस्यैकनिर्मिताद्वैलक्षण्यं स्यात्। यदा तु वैलक्षण्यं नेष्यते तदा कारणभेदे सति कार्यभेदस्याभावे निर्हेतुकमेकरूपं वा जगत्स्यात्। एतदुक्तं भवति। सत्यपि भिन्ने कारणे यदि कार्यस्याभेदस्तदा समग्रं जगन्नानाविधकारणजन्यमेकरूपं स्यात्। कारणभेदाननुगमात्स्वातन्त्र्येण निर्हेतुकं वा स्यात्(१)। यद्येवं कथं तेन त्रिगुणात्मनाऽर्थेन(२) एकस्यैव प्रमातुः सुखदुःखमोहमयानि ज्ञानानि न जन्यन्ते? मैवम्, यथाऽर्थस्त्रिगुणस्तथा चित्तमपि त्रिगुणं तस्य चार्थप्रतिभासोत्पत्तौ धर्मादयः सहकारिकारणं तदुद्भवाभिभववशात्कदाचिच्चित्तस्य तेन तेन रूपेणाभिव्यक्तिः,—तथा च कामुकस्य संनिहितायां योषिति धर्मसहकृतं चित्तं सत्त्वस्याङ्गितया परिणममानं सुखमयं भवति, तदेवाधर्मसहकारि रजसोऽङ्गितया दुःखरूपं सपत्नीमात्रस्य भवति, तीव्राधर्मसहकारितया परिणममानं तमसोऽङ्गित्वेन(३) कोपनायाः सपत्न्या मोहमयं भवति; तस्माद्विज्ञानव्यतिरिक्तोऽस्ति बाह्योऽर्थः। तदेवं न विज्ञानार्थयोस्तादात्म्यं विरोधात्, न कार्यकारणभावः कारणाभेदे सत्यपि कार्यभेदप्रसङ्गादिति ज्ञानाद्व्यतिरिक्तत्वमर्थस्य व्यवस्थापितम् ॥ १५ ॥ १६ ॥

## भावागणेशवृत्तिः।

कार्यकारणे विवेकेन परीक्ष्येदानीं यद्बौद्धा आहुः—कार्यकारणरूपं सर्वमसत् चित्तमात्रकल्पितं स्वप्नवदिति तन्निषेधमुखेनैव चित्ततदर्थयोर्विवेकः परीक्ष्यते सूत्रैः—**वस्त्विति**।

एकस्मिन्नेव विषये चित्तान्तरवियोगेन चित्तान्तरालम्बनतादर्शनात्तयोश्चित्तार्थयोर्विभक्तः पन्थाः स्वरूपोन्नयनमार्गः। एकानेकत्वरूपविरुद्धधर्मद्वयामित्यर्थः। वस्तुसाम्यं तु प्रत्यभिज्ञासिद्धम्। क्षणिकविज्ञानमेव च परेषां चित्तमित्यतश्चित्तभेदेनैव विज्ञानभेदोऽर्थेषु सिद्ध इति न स्वप्नतुल्यत्वम् ॥ १५ ॥

विज्ञानवादं निरस्य दृष्टिसृष्टिवादं निरस्यति—**नचेति**।

नाप्येकचित्ततन्त्रमेकविज्ञानसमनियतं वस्तु दृश्यपदार्थो यतस्तदा तर्हि तत्प्रमाणकं तच्चित्तसिद्धं किं वस्तु स्यात्। किमपि न स्यात्। चित्तापायेऽपि स्वरूपे नैव तिष्ठेत्। चित्तनाशकल्पने प्रमाणाभावात्। प्रत्युत प्रत्यभिज्ञायाः स्थैर्यस्यैव सिद्धेरित्यर्थः ॥ १६ ॥

## नागोजीभट्टवृत्तिः।

किंच—**वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः**। वस्तुसाम्ये वस्त्वेकत्वे' चित्तमत्र ज्ञानं तद्भेदात्तयोर्वस्तुज्ञानयोर्विभक्तः पन्थाः स्वरूपभेदोन्नायको मार्ग इत्यर्थः। एकस्यैव घटस्य बहुज्ञानालम्बनत्वं दृश्यते। यथैकस्यामेव कान्तायां कान्तस्य सुखज्ञानं सपत्नीनां दुःखज्ञानं चैत्रस्य तामविन्दतो मूढज्ञानम्। प्रमातॄणां परस्परप्रतिसंधानवशाच्च वस्त्वभेदः प्राप्नोति। सादृश्यप्रत्ययाभावाच्च। अन्यज्ञानपरिकल्पितायामन्यस्य चित्तोपरागायोगाच्च। अतो नैकचित्तपरिकल्पिता नाप्यनेकचित्तपरिकल्पिता ज्ञानभेदेन भेदापत्तेः। एतेन सर्वं चित्तमात्रपरिकल्पितमसत्, स्वप्नवदिति वादोऽपि परास्तः। अस्माकं तु त्रिगुणत्वादेकसुखादिभेदाभिन्नाविज्ञानहेतुत्वमुपपद्यते। धर्मादिकारणसापेक्षत्वान्न सर्वेषां सर्वरूपेण ज्ञानम्। धर्मापेक्षं सत्त्वं रजःसहितं सुखज्ञानं जनयति। अधर्मापेक्षं तमःसहितं रजो दुःखज्ञानम्। बलवदधर्मापेक्षं रजःसहितं तमो मूढविज्ञानम्। विद्यापेक्षं विगलितरजस्तमस्क(स)त्त्वं माध्यस्थ्यज्ञानमिति ॥१५॥

केचित्तु अस्त्वर्थो ज्ञानादतिरिक्तः परंतु ज्ञानेनैव भास्यत्वात् ज्ञानसमय एवास्ति नान्यदा मानाभावात्। एवञ्च सुखादिवद्भोग्यत्वात् ज्ञानसहभूरेवार्थ इति वदन्ति एष एव दृष्टिसृष्टिवादस्तं निरस्यति—**नचैकचित्ततन्त्रं वस्तु तत्प्रमाणकं तदा किं स्यात्**। तत्प्रमाणकमपि विज्ञानप्रमाणकं तान्निर्भास्य-

---

(१) निर्हेतुकं स्यादिति पाठान्तरम्।

(२) चित्तेनेति पाठान्तरम्। (३) तया तमसोऽङ्गित्वेनेति पाठान्तरम्।

मपि नैकविज्ञानसमानियतमिति च तदा किं स्यादित्यस्य यदा यद्वस्तुमाहिचित्तं व्यग्रतया तद्वस्तूनि न वर्तते यदा च निरोधमापन्नमित्यादि तदा तद्वस्तु किं स्यात् न स्यादेवेत्यर्थः । ज्ञाननाशान्नष्टमेव स्यात् । एवंसति पुनस्तस्य ज्ञानविषयता न स्यात् । दृश्यते तु ज्ञानविषयता नच पुनरुत्पद्यते उत्पादकसामर्थ्याभावात् । नियतकारणान्वयव्यतिरेकानुविधायि हि कार्यम् । नच ज्ञानकारणं तत् उपभुज्यमानाऽऽम्रामोदकस्यापि रसवीर्यविपाकादिप्रसङ्गात् । ज्ञानेन सह स्वकारणैरुत्पत्त्यननुभवाच्च प्रत्यभिज्ञायाः स्थैर्यसिद्धेश्च । तस्मात्स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तन्ते तयोः संबन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

ननु क्षणिकविज्ञानात्मकचित्तातिरिक्तं वस्तु नास्त्येव यत्प्रमेयं तद्विज्ञानाभिन्नं, यथा विज्ञानं, प्रमेयाश्च घटादयोऽतः कस्यैकत्वनानात्वचिन्ता चित्तमेव ह्यनादि समनन्तरप्रत्ययात्मकवासनाविचित्रं द्रव्यगुणात्मना भवतीति वदन्तं बौद्धं प्रत्याह—**वस्तुसाम्येपीति** ।

तयोश्चित्तवस्तुनोर्विभक्तः पन्था भिन्नो मार्गः विज्ञानार्थयोर्भेद इति यावत् । कुतो ? वस्तुनः स्त्रीपिण्डादेः साम्येऽपि चित्तानां भेदाद्यदेकस्यां नार्य्यां पत्युः सुखविज्ञानं, सपत्न्या दुःखविज्ञानं, तदलाभे कामुकस्य मोहो विषादस्तद्विज्ञानं, निष्कामस्योपेक्षाविज्ञानं, सर्वेषां या त्वया दृष्टा सा मयाऽपि दृष्टेत्यबाधितप्रत्यभिज्ञानादेकं वस्त्वनेकं विज्ञानमिति तयोर्भेदः । यदेकं तदनेकेभ्यो भिन्नं, यथा नीलविज्ञानं पीतविज्ञानेभ्यः, एकं च वस्त्वतः स्वगोचरानेकविज्ञानेभ्यो भिन्नम् । न च प्रमेयस्य प्रमैक्यं युक्तम् । एकत्वे विषयविषयित्वविरोधाद्ग्राह्यार्थाभावे विज्ञानानां नीलपीताद्याकारत्वायोगाच्च । नः च प्रयेयात्मकवासना तत्र हेतुरिति वाच्यम् । नष्टस्याहेतुत्वात् । न चैकरूपादर्थाच्चित्त कथं चित्तवैचित्र्यमिति वाच्यम् । अर्थस्य त्रिगुणत्वाद्धर्माधर्माविद्याऽपेक्षयाऽर्थगतानां सत्त्वरजस्तमसामुद्रेकात्सुखदुःखमोहविज्ञानहेतुत्वं तत्त्वज्ञानापेक्षया गुणानां साम्यादुपेक्षाहेतुत्वमिति युक्तत्वात्तस्मादस्ति विज्ञानातिरिक्तोऽर्थः ॥ १५ ॥

## मणिप्रभा ।

यत्तु कश्चिदाह—'अस्तु विज्ञानादन्योऽर्थः स तु जडत्वाद्विज्ञानग्राह्यः प्रातिभासिको नाज्ञातोऽस्तीति' । स वक्तव्यः कुतस्तस्योत्पत्तिरिति । ग्राहकविज्ञानाच्चित्तादिति चेत् । किमेकचैत्रचित्तस्य घटवस्तुकार्यम् , उत चैत्रमैत्राद्यनेकचित्तानां, नाद्य इत्याह—**न चेति** ।

यद्येकचित्तस्य कार्यं घटवस्तु तदा तस्मिंश्चित्ते पटादिषु व्यग्रे तद्वस्त्वप्रमाणकं किन्नष्टं स्यादित्यर्थः । न चेष्टापत्तिः, पुनस्तद्दर्शने सोऽयमित्यबाधितप्रत्यभिज्ञानादेकस्य व्यग्रत्वेऽप्यन्येन दृश्यमानत्वाच्च, तस्मान्नैकचित्ततन्त्रं वस्तु नाप्यनेकचित्ततन्त्रं प्रातिभासिकस्य स्वप्रबदेकचित्ततन्त्रत्वनियमात्पूर्वमेकेन दृश्यमाने घटे बहुचित्तैः पश्चात्सम्बन्धे विलक्षणघटान्तरोत्पत्तिप्रसङ्गाच्च सामग्रीवैलक्षण्यात् । किं चोदरदर्शनकाले पृष्ठभागो नास्तीत्युदरमपि न स्यात् तस्मान्न प्रातिभासिकं वस्तु किं तु चित्तातिरिक्तं स्वतन्त्रमिति सिद्धम् ॥ १६ ॥

## चन्द्रिका ।

वस्तुनो ज्ञानैकत्वे कथमेतदित्याह—**वस्त्विति** । तयोर्ज्ञानज्ञेययोर्विविक्तः पन्था कथं वस्तुसाम्ये चित्तभेदात् स्त्र्यादिवस्त्वेकत्वे प्रमातॄणां सुखादिनानारूपचित्तपरिणामात् ॥ १५ ॥ १६ ॥

## योगसुधाकरः ।

ननु क्षणिकविज्ञानात्मकचित्तातिरिक्तं वस्तु नास्त्येवेति वदन्तं बौद्धं प्रत्याह—**वस्त्विति** ।

तयोर्विज्ञानात्मकचित्तवस्तुनोर्विभक्तः पन्था भिन्नो मार्गः । कुतः ? वस्तुनः स्त्रीपिण्डादेः साम्येऽपि चित्तानां भेदात् । यथैकस्यां नार्यां पत्युः सुखविज्ञानं सपत्न्या दुःखविज्ञानं कामुकस्य तदलाभान्मोहे विषादविज्ञानं निष्कामस्योपेक्षाविज्ञानम् , सर्वेषाम् 'या त्वया दृष्टा सा मयापि दृष्टा' इत्यबाधितविषय-

प्रत्यभिज्ञानादेकं वस्त्वनेकं विज्ञानमिति तयोर्भेदः । अतो न विज्ञानात्मकं सर्वं वस्तु ; किं तु तस्माद्भिन्नं गुणत्रयपरिणाम इति दिक् ॥ १९ ॥

### योगसुधाकरः ।

नन्वस्तु विज्ञानादन्यद्वस्तु; तद्वैकविज्ञानाधीनमिति वदन्तं प्रत्याह—न चेति ।

यद्येकचित्तस्य ग्राह्यं घटवस्तु, तदा तस्मिश्चित्ते पटादिषु व्यग्रे तद्वस्तु अप्रमाणकं किं स्यात् ? न स्यादित्यर्थः । न चेष्टापत्तिः, पुनस्तद्दर्शने सोऽयमित्यबाधितप्रत्यभिज्ञानात् एकस्य व्यग्रत्वेऽप्यन्येन दृश्यमानत्वाच्च । तस्मान्नैकचित्ततन्त्रं वस्तु, किं तु चित्तातिरिक्तं स्वतन्त्रमिति सिद्धम् ॥ १६ ॥

### भोजवृत्तिः ।

यद्येवं ज्ञानं चेत्प्रकाशकत्वाद्ग्रहणस्वभावमर्थश्च प्रकाश्यत्वाद्ग्राह्यस्वभावस्ततःकथं युगपत्सर्वानर्थान्न गृह्णाति न स्मरति चेत्याशङ्क्य परिहारं वक्तुमाह—

## (१)तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥

तस्यार्थस्योपरागादाकारसमर्पणाच्चित्ते बाह्यं वस्तु ज्ञातमज्ञातं च भवति । अयमर्थः—सर्वः पदार्थ आत्मलाभे सामग्रीमपेक्षते । नीलादिज्ञानं चोपजायमानमिन्द्रियप्रणालिकया(२) समागतमर्थोपरागं सहकारिकारणत्वेनापेक्षते. व्यतिरिक्तस्यार्थस्य संबन्धाभावाद्ग्रहीतुमशक्यत्वात् , ततश्च येनैवार्थेनास्य ज्ञानस्य स्वरूपोपरागः कृतस्तमेवार्थं ज्ञानं व्यवहारयोग्यतां नयति, ततश्च सोऽर्थो ज्ञात इत्युच्यते, येन चाऽऽकारो न समर्पितः स न ज्ञातत्वेन(३) व्यवह्रियते यस्मिंश्चानुभूतेऽर्थे सदृशादिः(४) अर्थः संस्कारमुद्बोधयन्सहकारिकारणतां प्रतिपद्यते तस्मिन्नेवार्थे स्मृतिरुपजायत इति न सर्वत्र ज्ञानं नापि सर्वत्र स्मृतिरिति न कश्चिद्विरोधः ॥ १७ ॥

### भावागणेशवृत्तिः ।

नन्वेवं चित्ततदर्थयोर्भिन्नत्वे कदाचिदेव कंचिदेव चित्तेन गृह्यत इत्यत्र किं नियामकमित्याकाङ्क्षायामाह—तदुपरागादिति ।

चित्तस्य कालभेदेन वस्तु ज्ञातमज्ञातं च भवति । कुतः ? अर्थाकारताख्योपरागरूपज्ञानसापेक्षत्वादर्थज्ञातत्वाज्ञातत्वयोरित्यर्थः । नचोपरागशब्दस्य संनिकर्ष एवार्थः कथं नेष्यत इति वाच्यम् । संनिकर्षस्य संबन्धसापेक्षार्थज्ञानतया वक्ष्यमाणस्य चित्तपुरुषवैयर्थ्यस्यानुपपत्तेश्चेति ॥ १७ ॥

### नागोजीभट्टवृत्तिः ।

ननु चित्ततदर्थयोर्भिन्नत्वे कदाचिदेव कंचिदेव चित्तेन गृह्यत इत्यत्र नियामकमाह—तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् । तद् विषयस्तस्योपरागो नामाकारसमर्पणयोग्यस्तत्संबन्धस्तत्सापेक्षत्वाच्चित्तस्य विषयो ज्ञातश्चाज्ञातश्च भवतीत्यर्थः । येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञातस्ततोऽन्येऽज्ञाताः । वृत्तौ स्वाकारसमर्पणमेव विषयस्य ज्ञातत्वम् । इन्द्रियप्रणाडिकया विषयोपरक्तचित्तवृत्त्यविभागापन्ना चितिशक्तिरर्थमनुभवति नत्वर्थे किंचित्प्राकट्यादिकमाधत्ते । यद्यपि सर्वगता चितिश्चित्तं चाहंकारिकमिन्द्रियं च तेनास्ति विषयस्य संबन्धः सर्वदा, तथापि यत्र शरीरे वृत्तिमच्चित्तादि तेनैव विषयाणां संबन्धः । तदुक्तं भाष्ये 'अयस्कान्तमणिकल्पा विषयाः' अयस्कल्पं चित्तमभिसंबध्योपरञ्जयन्तीति मिश्राः । वस्तुनो ज्ञाताज्ञातरूपत्वाच्च परिणामि चित्तम् ॥ १७ ॥

---

( १ ) ननु सिद्धं ज्ञानव्यतिरिक्तत्वमर्थस्य तथापि ज्ञानं प्रकाशरूपत्वात् ग्रहणस्वभावमर्थश्च प्रकाश्यत्वात् ग्राह्यस्वभावः न हि भावः कदाचित् स्वभावं त्यजति एवं च कथं युगपत् सर्वानर्थान् न गृह्णातीत्यत आह तदुपेति ।

( २ ) ऐन्द्रियकतयेति पाठान्तरम् ।

( ३ ) समर्पितः सोऽज्ञातत्वेनेति पाठान्तरम् । ( ४ ) सादृश्यादिरिति पाठान्तरम् ।

### मणिप्रभा ।

ननु सिद्धान्ते विभुनश्चित्तस्य सर्वसम्बन्धात् सदा सर्वं ज्ञायेतेत्यत आह—तदुपरागादिति ।

यद्यप्याहङ्कारिकत्वाच्चित्तेन्द्रियाणि विभूनि तथाऽपि तेषामहङ्कारे सुप्तानां सम्बन्धो विषयस्य स्फूर्त्तावहेतुः किं तु कर्मणाऽभिव्यक्तानां देहस्थानां, तथा चन्द्रियद्वारा येनार्थेन 'चित्तस्यो'परागः तस्मिन्नर्थे चित्तं स्वनिष्ठचित्प्रतिबिम्बरूपां स्फूर्त्तिं धत्ते तमर्थं स्वाकारवृत्तिद्वारा बुद्धिस्थप्रतिबिम्बद्वारा पुरुषश्चेतयते नान्यमिति वस्तु ज्ञाताज्ञातं भवति । अत एव चित्तं तदर्थोपरागमपेक्ष्य कदाचिद्वस्तु जानाति कदाचिन्नेति ज्ञाताज्ञातविषयत्वात्परिणामीति भावः ॥ १७ ॥

### चन्द्रिका ।

चित्तं कथं युगपत् सर्वार्थान्न गृह्णातीत्याशङ्क्य परिहरति तदुपरागादिति । तस्यार्थस्योपरागादाकारसमर्पणाच्चित्तस्य बाह्यवस्तु ज्ञातमज्ञातं च भवतीत्यर्थः ॥ १७ ॥

### योगसुधाकरः ।

ननु चित्तस्याहंकारिकत्वेन सर्वगतत्वात्सर्वदा सर्वं ज्ञायेतेत्यत आह—तदिति ।

सर्वगतत्वेऽपि चित्तं यत्र शरीरे वृत्तिमत्तेन शरीरेण सह सम्बन्धो यस्य वस्तुनस्तत्रैव ज्ञानं नेतरत्र । एवं चेन्द्रियप्रणाडिकया चित्तं येन वस्तुनोपरक्तं तद्वस्तु ज्ञातम्, यदुपरक्तं न भवति तदज्ञातमित्यर्थः । अनेन चित्तं परिणामि ज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति चित्तस्य परिणामित्वेऽनुमानमुक्तं भवतीत्यभिसन्धिः ॥ १७ ॥

### भोजवृत्तिः ।

यद्येवं प्रमाताऽपि पुरुषो यस्मिन्काले नीलं वेदयते न तस्मिन्काले पीतमतस्तस्यापि(१) कादाचित्कत्वं ग्रहीतृरूपत्वादाकारग्रहणं परिणामित्वं प्राप्तमित्याशङ्क्य परिहर्तुमाह—

## (२)सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्(३) ॥१८॥

या एताश्चित्तस्य प्रमाणविपर्ययादिरूपा वृत्तयस्तासां तत्प्रभोश्चित्तस्य ग्रहीतुः पुरुषस्य सदा सर्वकालमेव ज्ञेयाः, तस्य चिद्रूपतयाऽपरिणामित्वात्(४) परिणामित्वाभावादित्यर्थः । यद्यसौ परिणामी स्यात्तदा परिणामस्य कादाचित्कत्वात्प्रमातुस्तासां चित्तवृत्तीनां सदा ज्ञातत्वं नोपपद्येत । अयमर्थः—पुरुषस्य चिद्रूपस्य सदैवाधिष्ठातृत्वेन व्यवस्थितस्य यदन्तरङ्गं निर्मलं(५) सत्त्वं तस्यापि सदैवावस्थितत्वाद्येन येनार्थेनोपरक्तं भवति तथाविधस्यार्थस्य सदैव चिच्छायासंक्रान्तिसद्भावस्तस्यां सत्यां सिद्धं सदा ज्ञातृत्वमिति न कदाचित्परिणामित्वाशङ्का(६) ॥ १८ ॥

### भावागणेशवृत्तिः ।

चित्तार्थयोर्भेदं परीक्ष्य चित्तपुरुषयोरपि भेदं परीक्षते—सदेति ।

चित्तस्यार्थो ज्ञाताज्ञातरूप इत्युक्तम् । ये तु पुरुषार्थाश्चित्तवृत्तयस्ते सदा ज्ञाता एव भवन्ति अनेन वैधर्म्येण चित्तपुरुषयोर्भेद इति भावः । सदा ज्ञातत्वे हेतुमाह तत्प्रभोरित्यादि । तत्प्रभोर्वृत्तिभोक्तुः पुरुषस्य पूर्वसूत्रोक्तोपरागादिलक्षणाशेषपरिणामशून्यत्वात् । यदि सत्यपि विषये पुरुषः कदाचिदेवार्थाकारः स्यात् कदाचिन्नेत्येवं चित्तवत्परिणामी स्यात् तदेवं चित्तवत्सोऽपि ज्ञाताज्ञातविषयकः स्यात् । न त्वेव-

---

(१) पीतादिमताश्चित्तसत्त्वस्यापीति पाठान्तरम् ।

(२) नन्वेवं प्रमाता पुरुषोऽपि यस्मिन् काले नीलं संवेदयति न तस्मिन् काले पीतमतश्चित्तवत् तस्यापि कादाचित्कत्वं ग्रहीतृरूपत्वादाकारग्रहणे परिणामित्वं प्राप्तमत आह सदेति । तथा च वृत्तिमच्चित्तं सर्वदा पुरुषेणानुभूयते यतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयो भवेत् न चैवमित्याशयः ।

(३) अपरिणामादिति पाठान्तरम् । (४) अपरिणामादिति पाठान्तरम् ।

(५) निर्मलसत्त्वमिति पाठान्तरम् । (६) न कादाचित्परिणामाशङ्केति पाठान्तरम् ।

म् । तस्मादपरिणामित्वाद्धेतोः सदा ज्ञातविषयत्वम् । अविभागलक्षणप्रतिबिम्बश्च सम्बन्धो न परिणामो नापि वृत्तौ सत्यां तत्प्रतिबिम्बे विलम्ब इत्यर्थः । यदि च वृत्तीनामज्ञातत्वं स्यात्तर्हि जानामि न वेत्यादिसंशयापत्तिरिति ॥ १८ ॥

### नागोजीभट्टवृत्तिः ।

चित्तार्थयोर्भेदं परीक्ष्य चित्तपुरुषयोरपि भेदमाह—**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्** । चित्तस्यार्थो ज्ञाताज्ञातरूप इत्युक्तम् । ये तु पुरुषस्यार्थाश्चित्तवृत्तयस्ते सदा ज्ञाता एव भवन्ति । अनेन वैधर्म्येण चित्तपुरुषयोर्भेदः । यतस्तत्प्रभोर्वृत्तिभोक्तुः पुरुषस्य पूर्वसूत्रोक्तोपरागादिलक्षणाशेषपरिणामशून्यत्वात् । यदि सत्यपि विषये पुरुषः कदाचिदेवार्थाकारः स्यात्तदा चित्तवत्परिणामी स्यात् । एवं सोऽपि ज्ञाताज्ञातविषयः स्यात्, नत्वेवम्, तस्मादपरिणामित्वाद्धेतोः सदा ज्ञातविषयत्वम् । अविभागलक्षणप्रतिबिम्बश्च सम्बन्धो न परिणामः । नापि वृत्तौ सत्यां तत्र विलम्बः अनादिवासनामूलत्वात् । अतएव जानामि नवा इच्छामि नवेति न संशयः ॥ १८ ॥

### मणिप्रभा ।

तर्ह्यात्मनः परिणामित्वमित्यत आह—**सदेति** ।

पुरुषस्य हि क्षिप्तमूढादिसर्ववृत्तिकं चित्तं विषयः, स यदि चित्तेन स्वविषयशब्दादिवत् पुरुषेण स्वसत्ताकाले न ज्ञायेत तर्हि चित्तवत्परिणामी स्यात्पुरुषः, वृत्तिपरिणामं तत्तदाकारमपेक्ष्य तज्ज्ञातृत्वापातात् तदा किं परिणामिद्वयेनेति चित्तादन्यः पुरुषो न स्यात् । सदैव तु स्वसत्ताकाले ज्ञायमानाश्चित्तवृत्तयो भोग्याः शब्दाद्याकाराः यस्य भोग्यस्य प्रभोर्भोक्तुरपरिणामित्वं ज्ञापयन्ति साक्षिणोऽपरिणामित्वादेव हि स्वयं सदा ज्ञाता भवन्ति नान्यथेत्यर्थः ॥ १८ ॥

### चन्द्रिका ।

पुरुषस्य परिणामित्वमाशङ्क्य परिहरति **सदेति** । याश्चित्तवृत्तयस्तास्तत्प्रभोस्तस्य चित्तस्य प्रभोः पुरुषस्य सदा सर्वकालमेव ज्ञेयाः तस्य चिद्रूपतयाऽपरिणामात् ॥ १८ ॥

### योगसुधाकरः ।

नन्वित्थमात्मनोऽपि परिणामित्वं किं न स्यादित्यत आह – **सदेति** ।

पुरुषोऽपरिणामी सदा ज्ञातृत्वात् न यदेवं न तदेवं यथा चित्तम् । तथा यद्यसौ पुरुषः परिणामी स्यात्तदा परिणामस्य कादाचित्कत्वात्तासां चित्तवृत्तीनां सदा ज्ञातत्वं न स्यात् । अतः सदा ज्ञातृत्वादपरिणामी पुरुष इत्यर्थः ॥ १८ ॥

### भोजवृत्तिः ।

ननु चित्तमेव यदि सत्त्वोत्कर्षात्प्रकाशकं तदा स्वपरप्रकाशकत्वादात्मानमर्थं च प्रकाशयतीति तावतैव व्यवहारसमाप्तेः किं ग्रहीत्रन्तरेणेत्याशङ्कामपनेतुमाह—

## न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥

तच्चित्तं स्वाभासं स्वप्रकाशकं न भवति पुरुषवेद्यं भवतीति यावत्, कुतः ? दृश्यत्वात्: यत्किल दृश्यं तद्द्रष्टृवेद्यं दृष्टं यथा—घटादि, दृश्यं च(१)चित्तं तस्मान्न स्वाभासम् ॥ १९ ॥

### भावागणेशवृत्तिः ।

ननु वृत्तय एव स्वप्रकाशाः कल्प्यन्ते कृतं पुरुषेणेत्याशङ्क्य निराकरोति—**नेति** ।

तच्चित्तवृत्तिरूपं न स्वाभासं न स्वप्रकाशं भवति । आकाशं स्वप्रतिष्ठमिति वत् । स्वगोचरप्रकाशं विनैव प्रकाशव्यवहाराज्जानामीच्छामीत्यादिरूपैर्दृश्यतयानुभवादित्यर्थः ॥ १९ ॥

### नागोजीभट्टवृत्तिः ।

ननु वृत्तय एव सन्तु स्वप्रकाशाः अग्निवत् किं वृत्तिज्ञात्रा पुरुषेणेति वैनाशिकाशङ्कायामाह—**न तत्स्वाभासं दृश्यत्वात्** । तच्चित्तवृत्तिरूपं न स्वाभासं न स्वप्रकाशं स्वगोचरप्रकाशं विना न

(१) वेद्यं चेति पाठान्तरम् ।

प्रकाशव्यवहारक्षमम् । कुतः ? दृश्यत्वात्, परिणामितया नीलादिवत् । अनुभवव्याप्यं हि दृश्यं, यच्चानुभवव्याप्यं न तत्स्वाभासं, स्वात्मनि वृत्तिविरोधात् । नहि तदेव क्रियाकर्म कर्ता च । पुरुषस्तु नानुभवकर्म । अतो न तस्य स्वयंप्रकाशताविरोधः । अपराधीनप्रकाशता ह्यस्य स्वयं प्रकाशता नानुभवकर्मतेति मिश्राः । यत्त्वहं जानमीत्यादौ पुरुषस्यानुभवव्याप्यतानुभूयते सा त्वनाद्यविद्यावासनावशाच्चित्तप्रतिबिम्बितस्यैवेति बोध्यम् । चित्ताविभक्तत्वेन गृहीतस्य वृत्त्यविभागेन गृहीतविषयेति तत्त्वम् । या सत्त्वगता चिच्छक्तिस्तदभिव्यक्तिरेव प्रतिबिम्बनम् । चिच्छक्तिद्वयं चात्र मते । एका नित्योदिता अपराभिव्यङ्ग्या । इयमेवान्तरङ्गत्वात् पुरुषस्य भोग्येति भोगराजः । एवं शब्दादिवज्जानामीत्यादिरूपैर्दृश्यत्वेनानुभवात्र स्वाभासत्वमिति भावः । अग्निरपि ज्ञानादेव प्रकाशते इति दृष्टान्तासिद्धिः । किंचाग्नेः प्रकाशोऽपि क्रियारूप इति तस्यापरेणैव कर्त्रा करणेन च भाव्यम् । किंच यथा स्वात्मप्रतिष्ठमाकाशमित्यस्याप्रतिष्ठमित्येवार्थः एवं स्वाभासमित्यस्याग्राह्यमित्येवार्थः स्यात् । स चायुक्तः, स्वचित्तव्यापारग्रहणेऽमुकाय क्रुद्धोऽहं भीतोऽहमित्याद्यभिलापानापत्तेः । ते च स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्ममनुभूयमानाः चित्तस्याग्राह्यतां विघटयन्तीति बोध्यम् ॥ १९ ॥

## मणिप्रभा ।

ननु चित्तमेव क्षणिकं स्वप्रकाशं स्वस्वार्थयोर्भासकमस्तु किं साक्षिणेत्यत आह—नेति ।

रूपी घट इतिवत् सुख्यहं, क्रुद्धोऽहं, शान्तं मे मन, इति दृश्यत्वाच्चित्तं स्वाभासं स्वप्रकाशं न भवतीत्यर्थः । अयं भावः । किमिदं स्वप्रकाशत्वम् ? न तावत्स्वाभिन्नप्रकाशक्रियाकर्मत्वं क्रियाकर्मणोरैक्यायोगात्र हि गतिर्गम्यते; किं तु ग्रामः, नापि पुरुषवच्चित्तस्य स्वभिन्नप्रकाशाविषयत्वं क्रुद्धं मे मन इत्यनुभवविषयत्वादतो दृश्यत्वात्स्वातिरिक्तद्रष्टृकं चित्तं सोऽहमिति प्रत्यभिज्ञानात्र क्षणिकमिति ॥१९॥

## चन्द्रिका ।

ननु चित्तं स्वप्रकाशमस्तु किं ग्रहीत्रन्तरकल्पनेनेत्याशङ्क्य परिहरति नेति । तच्चित्तं स्वाभासं स्वप्रकाशकं न भवति किन्तु पुरुषवेद्यं कुतो दृश्यत्वात् ॥ १९ ॥

## योगसुधाकरः ।

ननु क्षणिकं चित्तमेव स्वपरावभासकमस्तु, किं पुरुषेणेत्यत आह—नेति ।

'घटोऽयं रूपवान्' इतिवत् 'सुख्यहम्' 'क्रुद्धोऽहम्' 'शान्तं मे मनः' इति दृश्यत्वाच्चित्तं स्वाभासं स्वप्रकाशं न भवति; किं तु स्वातिरिक्तद्रष्टृकं न क्षणिकम्, 'सोऽहम्' इति प्रत्यभिज्ञानादित्युक्तम् ॥१९॥

## भोजवृत्तिः ।

ननु साध्याविशिष्टोऽयं हेतुः, दृश्यत्वमेव चित्तस्यासिद्धम् । किंच स्वबुद्धिसंवेदनद्वारेण पुरुषाणां हिताहितप्राप्तिपरिहाररूपा वृत्तयो दृश्यन्ते । तथाहि—क्रुद्धोऽहं भीतोऽहमत्र मे राग इत्येवमाद्या संविद्बुद्धेरसंवेदने नोपपद्येतेत्याशङ्कामपनेतुमाह—

## (१)एकसमये चोभयानवधारणम्(२) ॥ २० ॥

---

(१) ननु स्वबुद्धिसंवेदनद्वारेण पुरुषाणां हिताहितप्राप्तिपरिहाररूपाः प्रवृत्तयो दृश्यन्ते । तथाहि क्रुद्धोऽहमत्र मे राग इत्येवमाद्याः संविदः बुद्धेरसंवेदने नोपपद्यन्त इत्यतः स्वाभासं विषयाभासं च चित्तमिति वाच्यमित्याशङ्कां निरसितुं चित्तस्य स्वाभासवादिवैनाशिकमते दोषान्तरं दर्शयितुमाह एकेति । अयमाशयः । विषयाभासं स्वाभासं च चित्तं ब्रुवाणो वैनाशिकः येनैव व्यापारेण स्वमवधारयति तेनैव विषयमपीति न वक्तुमर्हति अविलक्षणव्यापारात् कार्यभेदानुपपत्तेः अतो व्यापारभेदो वाच्यः न च तेषां मते उत्पत्त्यतिरिक्तो व्यापारोऽस्ति न चैकस्या उत्पत्तेः कार्यवैलक्षण्यसम्भवः आकस्मिकत्वप्रसङ्गात् न वा एकस्य उत्पत्तिद्वयसम्भवः अतो ऽर्थस्य चित्तस्य च अवधारणमेकदा न सम्भवतीति ।

(२) नवधारणादिति पाठान्तरम् ।

अर्थस्य संवित्तिरिदंतया व्यवहारयोग्यतापादनमयमर्थः सुखहेतुर्दुःखहेतुर्वेति । बुद्धेश्च संविदहमित्येवमाकारेण सुखदुःखरूपतया व्यवहारक्षमतापादनम् । एवंविधं च व्यापारद्वयमर्थप्रत्यक्षताकाले(१) न युगपत्कर्तुं शक्यं विरोधात्, न हि विरुद्धयोर्व्यापारयोर्युगपत्संभवोऽस्ति । अत एकस्मिन्काले उभयस्य स्वरूपस्यार्थस्य चावधारयितुमशक्यत्वान्न चित्तं स्वप्रकाशमित्युक्तं भवति । किं चैवंविधव्यापारद्वयनिष्पाद्यस्य(२) फलद्वयस्यासंवेदनाद्बहिर्मुखतयैवार्थनिष्ठत्वेन चित्तस्य संवेदनादर्थनिष्ठमेव फलं न स्वनिष्ठमित्यर्थः ॥ २० ॥

## भावागणेशवृत्तिः ।

नन्वेवं सति स्वज्ञेयत्वमेव स्वाभासत्वं वक्तव्यं तत्राह—एकेति ।

यदा वृत्तिरुत्पद्यते न तदात्मानं ग्रहीतुं शक्नोति साक्षात्कारे विषयस्य हेतुत्वादित्यर्थः । नचोत्पद्य द्वितीयक्षणे तं गृह्णीयादिति वाच्यम् । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावेन द्विरर्थग्राहकत्वासंभवात् ॥ २० ॥

## नागोजीभट्टवृत्तिः ।

नन्वेवं स्वज्ञेयत्वमेव स्वाभासत्वमत आह—एकसमये चोभयानवधारणम् । यदा वृत्तिरुत्पद्यते न तदात्मनं ग्रहीतुं शक्नोति साक्षात्कारे विषयस्य हेतुत्वादित्यर्थः । नचोत्पद्य द्वितीयक्षणे स्वं गृह्णाति । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावेन द्विरर्थग्राहकत्वासंभवात् । कर्तृकर्मविरोधश्चोक्त एव ॥ २० ॥

## मणिप्रभा ।

किञ्च—एकेति ।

क्षणिकवादिन एकस्मिन्नेव क्षणे चित्तचैतन्ययोरुभयोरवधारणं न सम्भवतीत्यर्थः । तथा हि—'घटमहमद्राक्षमिति चित्तार्थयोः स्मरणं तयोरनुभवजन्यं तत्र चित्तक्षणे तयोः कथमनुभवः । न च चित्तमेवोभयानुभव इति वाच्यम् । अर्थस्य चित्तजन्यत्वेऽर्थक्षणे चित्तासत्त्वादजन्यत्वे समानकालत्वेऽपि तदुत्पत्तितादात्म्ययोरभावेन तद्ग्राह्यत्वायोगाद् असम्बद्धग्राहित्वे चित्तस्य सर्वज्ञताऽऽपत्तिः । उक्तं हि–सौगतैः—'असदुत्पत्तिरतदात्मा च तेन न गृह्यत' इति । न वा चित्तं स्वानुभवं दृश्यत्वादित्युक्तं, नापि चित्तं स्वस्वार्थयोरनुभवद्वयम् । अतिक्षणिकस्योत्पत्तिव्यतिरिक्तव्यापाराभावात् । उक्तं हि -'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते' इति । न चैकस्माद्व्यापारभेदं विना कार्यभेदो युक्तः । न ह्य स्वप्ने ज्ञानं ज्ञेयं च युगपत्कर्तुं शक्यं तस्मात्सक्षिणैव चित्तचैतन्ययोरनुभव इति सिद्धम् ॥ २० ॥

## चन्द्रिका ।

बुद्धेरसंवेदने रागादयो नोपपन्ना इत्याशङ्क्य निरसितुमाह एकेति । एकस्मिन् काले उभयस्य स्वरूपस्य अर्थस्य चावधारयितुमशक्यत्वाच्चित्तं न स्वप्रकाशम् ॥ २० ॥

## योगसुधाकरः ।

किञ्च—एकेति ।

यदि चित्तं स्वपरावभासकं स्यात्तदा तयोश्चित्तार्थयोर्जन्यजनकभावेन चित्तक्षणेऽर्थस्य अर्थक्षणे चित्तस्य चासत्त्वादेकस्मिन्नेव क्षणे तयोरुभयोरवधारणमनुभवो न स्यात् । तस्मात्पुरुष एव चित्तार्थयोरवभासको न चित्तमित्यर्थः ॥ २० ॥

## भोजवृत्तिः ।

ननु मा भूद्बुद्धेः स्वयं ग्रहणं बुद्ध्यन्तरेण भविष्यतीत्याशङ्क्याऽऽह—

**(३)चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २१ ॥**

---

(१) प्रत्यक्षकाले इति पाठान्तरम् । (२) द्वयायत्तस्येति पाठान्तरम् ।

(३) ननु साधूक्तं स्वाभासत्वं चित्तस्य तथापि ग्रहीता न सिद्ध्यति स्वसन्तानवर्ति पूर्वक्षणोत्पन्नं चित्तं उत्तरक्षणे नष्टमपि उत्तरक्षणोत्पन्नेन चित्तान्तरेण ग्राह्यमिति न कोऽपि दोष इत्यत आह चित्ता-

यदि हि बुद्धिर्बुद्ध्यन्तरेण वेद्यते तदा साऽपि बुद्धिः स्वयमबुद्धा बुद्ध्यन्तरं(१) प्रकाशयितुमसमर्थेति तस्या ग्राहकं(२) बुद्ध्यन्तरं कल्पनीयं तस्याप्यन्यादित्यनवस्थानात्पुरुषायुषेणाप्यर्थप्रतीतिर्न स्यात् । न हि प्रतीतावप्रतीतायामर्थः प्रतीतो भवति । स्मृतिसंकरश्च प्राप्नोति—रूपे रसे वा समुत्पन्नायां बुद्धौ तद्ग्राहिकाणामनन्तानां बुद्धीनां समुत्पत्तेर्बुद्धिजनितैः संस्कारैर्यदा युगपद्बह्व्यः स्मृतयः क्रियन्ते तदा बुद्धेरपर्यवसानाद्बुद्धिस्मृतीनां च बह्वीनां युगपदुत्पत्तेः कस्मिन्नर्थे स्मृतिरियमुत्पन्नेति ज्ञातुमशक्यत्वात्स्मृतीनां संकरः स्यात् , इयं रूपस्मृतिरियं रसस्मृतिरिति न ज्ञायेत(३) ॥ २१ ॥

## भावागणेशवृत्तिः ।

ननु तथापि वृत्त्यन्तरैर्वृत्तयो ग्राह्यास्तत्राह—चित्तान्तरेति ।

यदि वृत्तिश्चित्तान्तरेण वृत्त्यन्तरेण ग्राह्या स्यात्तदा बुद्धिबुद्धेर्वृत्तिर्वृत्तीनामतिप्रसंगोऽनवस्था । तथा स्मृतिसंकरः । अयं घट इति वृत्तिदशायां घटतज्ज्ञानज्ञानाद्यनन्तवृत्त्य( नुभवे ) ज्ञानधारापि स्मर्येत । तस्माद्वृत्त्यन्तरेण वृत्तिर्गृह्यते इति स्वीकर्तुमशक्यमित्यर्थः । अनन्तवृत्तिकल्पनापेक्षया सकलवृत्तिगोचरंनित्यविवेकचैतन्यकल्पने लाघवमिति भावः ॥ २१ ॥

## नागोजीभट्टवृत्तिः ।

ननु वृत्त्यन्तरैर्वृत्तयो ग्राह्यास्तत्राह—चित्तान्तरग्राह्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च । यदि वृत्तिश्चित्तान्तरेण गृह्यते तदा बुद्धिबुद्धेश्चिचवृत्तीनामतिप्रसङ्गोऽनवस्था । अगृहीताया बुद्धेः बुद्धिग्रहणासामर्थ्यात् । तथात्वे त्वाद्याया अपि तादृश्या एवं विषयग्राहकत्वं स्यादिति व्यर्था तत्कल्पना स्यात् । स्वयमप्रकाशमानाया इतरप्रकाशासामर्थ्यमिति चेत्तुल्यम् । स्मृतिसंकरश्च । यावतीनां बुद्धिवृत्तीनामनुभवास्तावतीनां धारापि घटघटज्ञानादिस्मर्येत । नत्वेवं स्मर्यते । तस्माद्वृत्त्यन्तरैर्वृत्तिग्रहो न युक्तः । किंचानन्तवृत्तिकल्पनापेक्षया नित्यविवेकचैतन्यकल्पने लाघवमिति बोध्यम् । ‘येऽपि साङ्ख्ययोगादयः स्वप्रकाशं ज्ञानमिति वदन्ति ते स्वशब्देन तत्स्वामिनं पुरुषं भोक्तारं गृह्णन्ति’ इति भाष्यम् ॥ २१ ॥

## मणिप्रभा ।

ननु माऽस्तु चित्तं स्वदृश्यं चित्तान्तरेण दृश्यतां किं साक्षिणेत्यत आह—चित्तेति ।

यदि नीलाकारं चित्तं चित्तान्तरेण दृश्यं तदा तदपि बुद्धिरूपं चित्तमन्यया बुद्ध्या साऽप्यन्ययेत्यनवस्थापातात् । न च द्वित्रास्त्रिचतुराः पञ्चषा वा चित्तात्मानो ग्राह्या इति नानवस्थेति वाच्यम् । ग्राहकचित्तस्यानिश्चये ग्राह्यचित्तानिश्चयात् गेहे घटो दृष्टो न वेति संशये, न दृष्ट इति व्यतिरेकनिश्चये, चार्थनिश्चयादर्शनेन. ज्ञानचित्तानिश्चयस्यार्थानिश्चयाहेतुत्वात् तत्तदनन्तचित्तानामनुभवे चानन्तचित्तस्मृतीनां सङ्करश्च प्राप्नोति स्मृत्यानन्त्यादशक्यग्रहत्वात् ग्राहकाभावाच्चेयं नीलचित्तस्मृतिरिति विभागो न स्यादित्यर्थः । चित्तानां समत्वाद् दीपानामिव ग्राहकत्वासम्भवश्च । अतः साक्षिवेद्यं चित्तमिति सिद्धम् ॥ २१ ॥

## चन्द्रिका ।

तर्हि बुद्ध्यन्तरेणास्तु ग्रहणमित्याशङ्क्याह । चित्तान्तरेति । यदि बुद्धिर्बुद्ध्यन्तरेण वेद्येत तस्या

---

न्तरेति । नागृहीता चरमा बुद्धिः पूर्वबुद्धिग्रहणसमर्था न हि बुद्ध्या असम्बद्धाऽन्यस्य बोधनसमर्था भवितुमर्हतीति तस्या अपि बुद्ध्यन्तरमेवं तस्यास्तस्या इत्यनवस्था। स्मृतिसङ्करश्चेति। विषयानुभवकाले ज्ञानधारा आसीत् स्मृतिकालेऽपि अनन्तानां तज्ज्ञानानां स्मृतिरेकदैव भविष्यति घटो मया पुरा ज्ञातः घटज्ञानं तज्ज्ञानं चेत्येवमनन्ताकारा । एवं च घटो मया ज्ञात इत्येकमात्राकारस्मृत्यनुभवस्तम्भवे न स्यादिति भावः । ( १ ) स्वयमेव स्वीयभावरूपमज्ञात्वा बुद्ध्वा बुध्येति पाठा० ।

( २ ) बोधकमिति पाठान्तरम् । ( ३ ) ज्ञायते इति पाठान्तरम् ।

अपि बुद्धित्वात् बुद्ध्यन्तरमित्यनवस्थानादर्थप्रत्यक्षं न स्यात्। स्मृतीनां रूपादिस्मृतीनां सङ्करश्च-किंविषयिणी स्मृतिरिति न ज्ञायते ॥ २१ ॥

### योगसुधाकरः ।

ननु मा नाम भूच्चित्तं स्वप्रकाशम्; चित्तान्तरेण प्रकाश्यताम् ; किं पुरुषेणेत्याशङ्क्याह—चित्तेति।

यदि नीलादिगोचरं चित्तं चित्तान्तरेण दृश्येत, तदा तदपि बुद्ध्यात्मकं चित्तमन्यया बुद्ध्या, साप्यन्ययेत्यतिप्रसङ्गः स्यात् । किं चानन्तचित्तानामनुभवे सत्यनन्तचित्तस्मृतीनां सङ्करः प्राप्नोति । अतश्चितिशक्तिभास्यं चित्तमिति सिद्धम् ॥ २१ ॥

### भोजवृत्तिः ।

ननु बुद्धेः स्वप्रकाशत्वाभावे बुद्ध्यन्तरेण चासंवेदने कथमयं विषयसंवेदनरूपो व्यवहार इत्याशङ्क्य स्वसिद्धान्तमाह—

## (१)चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥

पुरुषश्चिद्रूपत्वाच्चितिः साऽप्रतिसंक्रमा—न विद्यते प्रतिसंक्रमोऽन्यत्र गमनं यस्याः सा तथोक्ता, अन्येनासंकीर्णेति यावत् । यथा—गुणा अङ्गाङ्गिभावलक्षणे(२) परिणामेऽङ्गिनं गुणं संक्रामन्ति तद्रूपतामिवाऽऽपद्यन्ते, यथा—वा लोके परमाणवः प्रसरन्तो विषयमारूपयन्ति नैवं चितिशक्तिस्तस्याः सर्वदैकरूपतया स्वप्रतिष्ठितत्वेन व्यवस्थितत्वात् । अतस्तत्संनिधाने यदा बुद्धिस्तदाकारतामापद्यते चेतनेवोपजायते, बुद्धिवृत्तिप्रतिसंक्रान्ता च यदा चिच्छक्तिर्बुद्धिवृत्तिविशिष्टतया संवेद्यते(३) तदा बुद्धेः स्वस्याऽऽत्मनो वेदनं भवतीत्यर्थः ॥ २२ ॥

### भावागणेशवृत्तिः ।

ननु भवन्मतेऽप्यपरिणामिनः कथमस्य वृत्तिदर्शनं तत्राह —चितेरिति ।

अप्रतिसंचाराया अपि चितेः पुरुषस्य स्वीयबुद्धिवृत्तिदर्शनं बुद्धिवृत्त्याकारापत्त्यैव भवतीत्यर्थः । वृत्त्याकारतापत्तिश्च वृत्तिप्रतिबिम्बितत्वं तस्या नित्यम् ॥ २२ ॥

### नागोजीभट्टवृत्तिः ।

अथ स्वमते वृत्तिमानमुपपादयति—चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ।

अप्रतिसंक्रमाया अपरिणामिन्या अतएवाप्रतिबिम्बिताया अपि चितिशक्तेः परिणामार्थरूपा या बुद्धिवृत्तिस्तया विवेकाग्रहात् तदाकारापत्त इव जातायां स्वीयबुद्धिवृत्तिदर्शनं भवतीत्यर्थः । यदा प्रतिसंक्रमः संचारस्तद्रहिताया अपि बुद्धितद्वृत्तिभिर्विवेकाग्रहाद्बुद्धिवृत्तिसंचारेण संचरमाणाया इव विषयाकारवृत्त्यनाकाराया अपि तदाकारताया इवापत्तौ तद्दर्शनमित्यर्थः । तदुक्तं भाष्ये—'अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते' इति। तथाच श्रुतिः—

'न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम् ।
गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते ॥ इति ।

---

(१) ननु चित्तं यदि न स्वाभासं नापि चित्तान्तरदृश्यं कथं विषयसंवेदनरूपो व्यवहार इत्यतः सिद्धान्तमाह चितेरिति । अयं भावः । यथा चन्द्रमसो व्यापारविरहेऽपि सङ्क्रान्तप्रतिबिम्बं निर्मलं चलं जलं अचलं चन्द्रं चलमिव अवभासयति एवं विनापि चितिव्यापारं सङ्क्रान्तचित्प्रतिबिम्बं चित्तं स्वगतक्रियया चितिं क्रियावतीमिव समवभासयत् भोग्यभावमासादयत् भोक्तृभावमापादयति चितेरिति ।

(२) अङ्गादिभावलक्षणे इति पाठान्तरम् ।

(३) बुद्धिवृत्त्यविशिष्टतया संपद्यत इति पाठान्तरम् ।

अविशिष्टा विवेकाग्रहात् । चितेरविशिष्टाम् । तस्यामेव गुहायां तत् गुह्यं ब्रह्म तदपनये तु स्वयमनावरणमनुत्सर्गं प्रद्योतते चरमदेहस्य भगवत इति मिश्राः ॥ २२ ॥

## मणिप्रभा।

ननु कूटस्थस्य साक्षिणश्चित्तेन क्रियापूर्वकसम्बन्धाभावात्तेन कथं संवेद्यमित्यत आह—चितेरिति।

यथा बुद्धेः क्रियया घटादितंश्लेषः प्रतिसंक्रमेऽस्ति परिणामित्वान्न तथा चितेर्बुद्धौ प्रतिसंक्रमोऽपरिणामित्वात् । किं तु सूर्यस्य जले प्रतिबिम्बवच्चितेर्बुद्धौ प्रतिबिम्बे सति बुद्धेश्चिदाकारताऽऽपत्तौ स्वस्य भोग्याया बुद्धेः संवेदनं भवति चिच्छायाग्राह्यत्वसम्बन्धेन चिदुपरक्तं चित्तं चिद्वेद्यमित्यर्थः । 'अप्रतिसंक्रमाया'श्चितेः सान्निध्यात्तस्याश्चितेराकारश्छाया यत्र तद्भावापत्तौ सत्यां स्वभोग्यबुद्धिसंवेदनामिति योजना ॥ २२ ॥

## चन्द्रिका।

सिद्धान्तमाह चितेरिति । न विद्यते प्रतिसङ्क्रमोऽन्यत्र गमनं यस्याः सा अप्रतिसङ्क्रमा तस्याश्चितेः पुरुषस्य सदैकरूपत्वात् सन्निधौ बुद्धिस्तदाकारतामापद्यते चिच्छक्तिर्बुद्धिविशिष्टतया सम्पद्यते यदा तदा बुद्धेः स्वस्यात्मनो वेदनं भवतीत्यर्थः ॥ २१ ॥

## योगसुधाकरः।

ननु कूटस्थनित्यायाश्चितिशक्तेश्चित्तेन क्रियापूर्वकसंप्रयोगासम्भवात्कथं तत्तया भास्यमित्यत आह—चितेरिति।

यथा परिणामित्वाद्बुद्धितत्त्वस्य क्रियया घटादौ संप्रयोगः समस्ति, न तथा चितिशक्तेर्बुद्धितत्त्वे प्रतिसंक्रमः संप्रयोगः अपरिणामित्वात् । अपि तु सवितुः सलिले प्रतिबिम्बवच्चितिशक्तेर्बुद्धौ प्रतिबिम्बे सति तस्या बुद्धेश्चिदाकारतापत्तौ सत्यां स्वभोग्यबुद्धिसंवेदनं भवति । चिच्छायाग्राहित्वसम्बन्धेन चिदुपरक्तं चिद्भास्यमित्यन्वयम् ॥ २२ ॥

## भोजवृत्तिः।

इत्थं स्वसंविदितं चित्तं सर्वार्थग्रहणसामर्थ्येन सकलव्यवहारनिर्वाहक्षमं भवति(१) इत्याह—

## (२) द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

द्रष्टा पुरुषस्तेनोपरक्तं तत्संनिधानेन तद्रूपतामिव प्राप्तं दृश्योपरक्तं विषयोपरक्तं गृहीतविषयाकारपरिणामं यदा भवति तदा तदेव चित्तं सर्वार्थग्रहणसमर्थं भवति । यथा निर्मलं स्फटिकदर्पणाद्ये(३)व प्रतिबिम्बग्रहणसमर्थमेवं रजस्तमोभ्यामनभिभूतं सत्त्वं शुद्धत्वाच्चिच्छायाग्रहणसमर्थं भवति, न पुनरशुद्धत्वाद्रजस्तमसी । तत् (तदा) न्यग्भूतरजस्तमोरूपमङ्गितया सत्त्वं निश्चलप्रदीपशिखाकारं सदैवैकरूपतया परिणममानं चिच्छायाग्रहणसामर्थ्यादा मोक्षप्राप्तेरवतिष्ठते । यथाऽयस्कान्तसंनिधाने लोहस्य चलनमाविर्भवति, एवं चिद्रूपपुरुषसंनिधाने सत्त्वस्याभिव्यङ्ग्यमभिव्यज्यते चैतन्यम् । अत एवास्मिन्दर्शने द्वे चिच्छक्ती नित्योदिताऽभिव्यङ्ग्या च । नित्योदिता चिच्छक्तिः पुरुषस्तत्संनिधानादभिव्यक्तमभिव्यङ्ग्यचैतन्यं सत्त्वमभिव्यङ्ग्या चिच्छक्तिः । तच्चात्यन्तसंनिहितत्वादन्तरङ्गं पुरुषस्य भोग्यतां प्रतिपद्यते तदेव शान्तब्रह्मवादिभिः सांख्यैः पुरुषस्य परमात्मनोऽधिष्ठेयं कर्मानुरूपं सुखदुःखभोक्तृतया व्यपदिश्यते। यत्त्वनुद्रिक्तत्वादेकस्यापि गुणस्य कदाचित्कस्यचिदाङ्गित्वात्त्रिगुणं प्रतिक्षणे परिणममानं सुखदुःखमो-

---

(१) सकलनिर्वाहक्षमं भविष्यतीति पाठान्तरम् ।

(२) तदनेन बुद्धिवेदनेन चित्तस्य दृश्यत्वं तेन च दृश्यत्वेन चित्तस्य परिणामित्वं च सिद्धं तदतिरिक्तः पुमानपि अपरिणामी सिद्धः । एवं च स्वसंविदितं चित्तं सर्वार्थग्रहणसामर्थ्येन सकलव्यवहारनिर्वाहक्षमं भवतीत्याह वृत्तिः । (३) निर्मलं स्फाटिकं दर्पणादीति पाठान्तरम् ।

त्मकमानिर्मले तस्मिंस्तस्मिन्कर्मानुरूपे(१) शुद्धे सत्त्वे स्वाकारसमर्पणद्वारेण संवेद्यतामापादयति । तच्छुद्धमात्रं(२) चित्तसत्त्वमेकतः प्रतिसंक्रान्तचिच्छायमन्यतोगृहीतविषयाकारेण चित्तेनोपढौकितस्वाकारं चित्संक्रान्तिबलात् चेतनायमानं वास्तवचैतन्याभावेऽपि सुखदुःखभोगमनुभवति(३)। स एव भोगोऽत्यन्तसंनिधानेन विवेकाग्रहणादभोक्तुरपि पुरुषस्य भोग इति व्यपदिश्यते । अनेनैवाभिप्रायेण विन्ध्यवासिनोक्तं "सत्त्वतप्यत्वमेव पुरुषतप्यत्वम्"(४) इति । अन्यत्रापि प्रतिबिम्बे प्रतिबिम्बमानच्छायासदृशच्छायोद्भवः प्रतिबिम्बशब्देनोच्यते । एवं सत्त्वेऽपि पौरुषेयचिच्छायासदृशचिदभिव्यक्तिः प्रतिसंक्रान्तिशब्दार्थः । (५) ।

ननु प्रतिबिम्बनं नाम निर्मलस्य नियतपरिणामस्य निर्मले दृष्टं, यथा—मुखस्य दर्पणे । अत्यन्तनिर्मलस्य व्यापकस्यापरिणामिनः पुरुषस्य तस्मादत्यन्तनिर्मलात् पुरुषादनिर्मले सत्त्वे कथं प्रतिबिम्बनमुपपद्यते ? उच्यते—प्रतिबिम्बनस्य स्वरूपमनवगच्छता भवतेदमभ्यधायि । यैव सत्त्वगताया अभिव्यङ्ग्यायाश्चिच्छक्तेः पुरुषस्य सांनिध्यादभिव्यक्तिः(६) सैव प्रतिबिम्बनमुच्यते । यादृशी पुरुषगता चिच्छक्तिस्तच्छाया तथाऽविर्भवति । यदप्युक्तमत्यन्तानिर्मलः पुरुषः कथमनिर्मले सत्त्वे प्रतिसंक्रामतीति तदप्यनैकान्तिकं, नैर्मल्यादपकृष्टेऽपि जलादावादित्यादयः प्रतिसंक्रान्ताः समुपलभ्यन्ते । यदप्युक्तमनवच्छिन्नस्य नास्ति प्रतिसंक्रान्तिरिति तदप्ययुक्तम्, व्यापकस्याप्याकाशस्य दर्पणादौ प्रतिसंक्रान्तिदर्शनात् । एवं सति न काचिदनुपपत्तिः प्रतिबिम्बदर्शनस्य । ननु सात्त्विकपरिणामरूपे बुद्धिसत्त्वे पुरुषसंनिधानादभिव्यङ्ग्यायाश्चिच्छक्तेर्बाह्यार्थाकारसंक्रान्तौ पुरुषस्य सुखदुःखरूपो भोग इत्युक्तं तदनुपपन्नम्; तदेव चित्तसत्त्वं प्रकृतावपरिणतायां कथं संभवति किमर्थश्च तस्याः परिणामः? अथोच्येत पुरुषस्यार्थोपभोगसम्पादनं तया कर्तव्यम्, अतः पुरुषार्थकर्तव्यतया तस्या युक्त एव परिणामः, तच्चानुपपन्नं, पुरुषार्थकर्तव्यताया एवानुपपत्तेः, पुरुषार्थो मया कर्तव्य इत्येवंविधोऽध्यवसायः पुरुषार्थकर्तव्यतोच्यते, जडायाश्च प्रकृतेः कथं प्रथममेवंविधोऽध्यवसायः(७)। अस्ति चेदध्यवसायः कथं जडत्वम् । अत्रोच्यते- अनुलोमप्रतिलोमलक्षणपरिणामद्वये सहजं शक्तिद्वयमस्ति तदेव पुरुषार्थकर्तव्यतोच्यते(८) । सा च शक्तिरचेतनाया अपि प्रकृतेः सहजैव । तत्र महदादिमहाभूतपर्यन्तोऽस्या बहिर्मुखतयाऽनुलोमः परिणामः । पुनः स्वकारणानुप्रवेशद्वारेणास्मितान्तःपरिणामः प्रतिलोमः । इत्थं पुरुषस्याऽऽभोगपरिसमाप्तेः सहजशक्तिद्वयक्षयात्कृतार्था प्रकृतिर्न पुनः परिणाममारभते । एवंविधायां च पुरुषार्थकर्तव्यतायां जडाया अपि प्रकृतेर्न काचिदनुपपत्तिः । ननु यदीदृशी शक्तिः सहजैव प्रधानस्यास्ति तत्किमर्थं मोक्षार्थिभिर्मोक्षाय यत्नः क्रियते, मोक्षस्य चानर्थनीयत्वे तदुपदेशकशास्त्रस्याऽनर्थक्यं स्यात् । उच्यते-योऽयं प्रकृतिपुरुषयोरनादिर्भोग्यभोक्तृत्वलक्षणः(९) संबन्धस्तस्मिन्सति व्यक्तचेतनायाः प्रकृतेः कर्तृत्वाभिमानाद्दुःखानुभवे सति कथमियं दुःखनिवृत्तिरात्यन्तिकी मम स्यादिति भवत्येवाध्यवसायः, अतो दुःखनिवृत्त्युपायोपदेशकशास्त्रोपदेशापेक्षाऽस्त्येव प्रधानस्य; तथाभूतमेव च कर्मानुरूपं बुद्धिसत्त्वं शास्त्रोपदेशस्य विषयः । दर्शनान्तरेष्वप्येवंविध एवाविद्यास्वभावः शास्त्रेऽभिधीयते(१०) । स च मोक्षार्थं प्रयतमान एवंविधमेव शास्त्रोपदेशं सहकारिणमपेक्ष्य मोक्षाख्यं फलमासादयति । सर्वाण्येव कार्याणि प्राप्तायां सामग्र्यामात्मानं लभन्ते । अस्य च प्रतिलोमप-

(१) तस्मिन्कर्मणोऽऽत्मरूपे इति पाठान्तरम् ।

(२) तत्सत्त्वमात्रमिति पाठान्तरम् ।

(३) दुःखस्वरूपं भोगमिति पाठान्तरम् ।

(४) सत्त्वतप्यत्वमेव पुरुषीयमिति पाठान्तरम् ।

(५) सदृशस्वकीयचिच्छायान्तराभिव्यक्तिः प्रतिबिम्बशब्दार्थ इति पाठान्तरम् ।

(६) सांनिध्येऽभिव्यक्तिरिति पाठान्तरम् ।

(७) कथमेवंविधोऽध्यवसाय इति पाठान्तरम्

(८) कर्तव्यतयोच्यत इति पाठान्तरम् ।

(९) भोक्तृभावलक्षण इति पाठान्तरम् ।

(१०) अभिधियते इति पाठान्तरम् ।

रिणामद्वारेणैवोत्पाद्यस्य मोक्षाख्यस्य कार्यस्यैदृश्येव सामग्री प्रमाणेन निश्चिता प्रकारान्तरेणानुपपत्तेः, अतस्तां विना कथं भवितुमर्हति, अतः स्थितमेतत्—संक्रान्तविषयोपरागमभिव्यक्तचिच्छायं बुद्धिसत्त्वं विषयनिश्चयद्वारेण समग्रां लोकयात्रां निर्वाहयतीति। एवंविधमेव चित्तं पश्यन्तो भ्रान्ताः स्वसंवेदनं चित्तं चित्तमात्रं च जगदित्येवं ब्रुवाणाः प्रतिबोधिता भवन्ति ॥ २३ ॥

## भावागणेशवृत्तिः।

ननूत्पद्यतां कूटस्थस्यापि स्वबुद्धिज्ञानं प्रतिबिम्बरूपसंबन्धाच्छब्दादिभानमात्मभानं च कथं स्यात्? साक्षात्प्रतिबिम्बाङ्गीकारे शब्दादीनामज्ञानसत्तानुपपत्तेः, स्वस्मिन् साक्षात्स्वप्रतिबिम्बासंभवाच्च (इत्यत आह)—द्रष्टॄति।

चित्तमेव पुरुषस्य सर्वार्थं ग्रहीतृग्रहणग्राह्यरूपाखिलदृश्याधारभूतम्। न चित्तातिरिक्तं पुरुषस्य दृश्यमिति। यतो द्रष्टृदृश्याभ्यामुपरक्ता बुद्धिवृत्तिः साक्षाद्दृश्या। तदारूढतया तु द्रष्टृशब्दादिर्दृश्यो भवतीति क्षणिकविज्ञानमेव चित्तमिति बौद्धमते चित्तातिरिक्त आत्मा प्रसाधितः ॥ २३ ॥

## नागोजीभट्टवृत्तिः।

अथ चित्तातिरिक्तं (द्रष्टारं) प्रत्यक्षेणापि साधयति—**द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्।** सर्वार्थं प्रमाणीभूतमित्यर्थः। यथा नीलाद्यनुरक्तं चित्तं तमर्थं प्रत्यक्षेण स्थापयति, एवं द्रष्टृच्छायापन्नं चित्तं द्रष्टारमपि प्रत्यक्षेण स्थापयतीत्यर्थः। अतएव नीलमहं वेद्मीत्यनुभवः। अहमिति प्रत्ययो हि चैतन्योपरक्तचित्तविषयः। एवं यद्यपि ज्ञाता प्रत्यक्षविषयस्तथापि न विविच्य यथा जले चन्द्रबिम्बम्। तदुक्तं भाष्ये—'मनो हि मन्तव्यार्थेनोपरक्तं स्वयं च विषयत्वात् विषयिणा पुरुषेणात्मीयवृत्तिद्वाराभिसंबद्धं द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमपि अविषयात्मकमिवाचेतनमपि चेतनमिव स्फटिकमणिकल्पं सत्त्वमयत्वात्सर्वार्थमित्युच्यते। तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुरिति'। ननु समाधावालम्बनभाव आत्मनः कथमिति चेदत्र भाष्यं—'प्रतिबिम्बीभूतस्य चित्तवृत्तिद्वारा ज्ञेयत्वात्' मलिनेऽपि जलादौ अत्यन्तनिर्मलरवेः प्रतिबिम्बवत्पुरुषादनिर्मलेऽपि चित्ते पुरुषस्य प्रतिबिम्बस्वीकाराददोषः। हृदयावच्छिन्नचित्ते तदवच्छिन्नचैतन्यस्याविभागेनाबिभक्तिरेव प्रतिबिम्बितत्वम्। तदवच्छेदेन तथाभिव्यक्तस्य च चित्तवैधर्म्येण ज्ञानम् ॥ २३ ॥

## मणिप्रभा।

ननु यदि चित्तातिरिक्त आत्माऽस्ति तर्हि कथं केषाञ्चित् चित्तमेवात्मेति भ्रम इत्याशङ्क्य चित्तस्य सर्वार्थग्रहणसामर्थ्यं तेषां भ्रमबीजमाह—द्रष्टॄति।

द्रष्टा पुरुषश्चेतनः दृश्यं शब्दाद्यचेतनमिति तत्सर्वं चेतनाचेतनमर्थो विषयो यस्य तत्सर्वार्थं तत्र तत्सान्निध्याच्चिद्रूपतामिव प्राप्तं द्रष्टृ चिदुपरक्तं द्रष्टृविषयं भवति इन्द्रियादिद्वारा दृश्योपरक्तं तदाकारं भवति। तथा च भोग्यशब्दाद्याकारं सुखदुःखादिपरिणामलक्षणभोगात्मकं दृश्यमपि चित्तं चित्प्रतिबिम्बाभेदादात्मेति भ्रमः सौगतानां युक्तः। चित्तस्य जपाकुसुमाद्यर्थाकारग्रहणशीलाभिजातस्य स्फटिकमणिकल्पस्य दृश्याकारग्राहित्वाच्चित्तातिरिक्तार्थो नास्तीति विज्ञानवादिनां भ्रमः। अत्रेत्थं विवेकः। चित्तस्य भोग्यत्वाद्भोक्ताऽन्यः स्वीकर्तव्यः स नित्योदिता चिच्छक्तिरित्युच्यते। द्विधा चिच्छक्तिः नित्योदिता ऽभिव्यङ्ग्या चेति। तत्र नित्योदितायाः कूटस्थचिच्छक्तेः चित्तसत्त्वाभिव्यङ्ग्या चित्प्रतिबिम्बरूपा सुखादिसारूप्यमापन्ना चिच्छक्तिर्भोग इत्युच्यते। स द्विविधश्च भोगः चिदवसानतारूप एकः, परिणामलक्षणोऽपरः, तत्राभिव्यङ्ग्या चिच्छक्तिराद्यः पुरुषस्य भोगः, अपरः सुखादिपरिणामो बुद्धेः प्राप्तचैतन्याया इति। इत्थं बुद्धिपुरुषान्तरं विविच्य विध्वस्तसमस्तमलजालं निश्चलप्रदीपशिखाकारं समाहितं प्रशान्तवाहिचित्तं पुरुषसत्तां विजानातीति तात्पर्यम् ॥ २३ ॥

## चन्द्रिका।

**द्रष्टॄति।**

द्रष्टा पुरुषस्तेनोपरक्तं तदाकारतामिव प्राप्तं दृश्योपरक्तं विषयाकारपरिणामं यदा भवति तदा

तदेव सर्वार्थग्रहणसमर्थं जायते ॥ २३ ॥

### योगसुधाकरः ।

ननु तर्हि केषांचिच्चित्तमेव चिदात्मेति भ्रमः कथमित्याशङ्क्य तेषां भ्रमबीजमाह—द्रष्टृदृश्येति। सर्वो द्रष्टृदृश्यरूपोऽर्थो विषयो यस्य तत्सर्वार्थम् । तत्र चित्सान्निध्याच्चिद्रूपतामिव प्राप्तं द्रष्टुपरक्तं द्रष्टृविषयं भवति । इन्द्रियादिद्वारा दृश्योपरक्तं तदाकारं भवति । तथा च भोग्यशब्दाद्याकारं सुखदुःखादिपरिणामलक्षणभोगात्मकं चित्तं दृश्यमपि चित्प्रतिबिम्बाभेदादात्मेति सौगतानां भ्रमः । तत्र विवेकिना चित्तस्य भोग्यतया तस्मादन्यो भोक्ता स्वीकर्तव्य इति भावः ॥ २३ ॥

### भोजवृत्तिः ।

ननु यद्येवंविधादेव चित्तात्सकलव्यवहारनिष्पत्तिः कथं प्रमाणशून्यो द्रष्टाऽभ्युपगम्यत इत्याशङ्क्य द्रष्टुः प्रमाणमाह—

**(१)तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥**

तदेव चित्तं संख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनः(२) भोक्तुर्भोगापवर्गलक्षणमर्थं साधयतीति, कुतः ? संहत्यकारित्वात्. संहत्य संभूय मिलित्वाऽर्थक्रियाकारित्वात् । यच्च संहत्यार्थक्रियाकारि तत्परार्थं दृष्टं, यथा—शयनासनादि । सत्त्वरजस्तमांसि च चित्तलक्षणपरिणामभाञ्जि संहत्यकारीणि चातः परार्थानि । यः परः स पुरुषः । ननु यादृशेन शयनादिना(३)परेण शरीरवता पारार्थ्यमुपलब्धं तद्दृष्टान्तबलेन तादृश एव परः सिध्यति । यादृशश्च भवता परोऽसंहतरूपोऽभिप्रेतस्तद्विपरीतस्य सिद्धेरयमिष्टविघातकृद्धेतुः । उच्यते—यद्यपि सामान्येन परार्थमात्रे(४) व्याप्तिर्गृहीता तथापि सत्त्वादिविलक्षणधर्मिपर्यालोचनया तद्विलक्षण एव भोक्ता परः सिध्यति । यथा—चन्दनवनावृते शिखरिणि विलक्षणाद्धूमाद्वह्निरनुमीयमान इतरवह्निविलक्षणश्चन्दनप्रभव एव प्रतीयते, एवमिहापि विलक्षणस्य सत्त्वाख्यस्य भोग्यस्य परार्थत्वेऽनुमीयमाने तथाविध एव भोक्ताऽधिष्ठाता परश्चिन्मात्ररूपोऽसंहतः सिध्यति । यदि च तस्य परत्वं सर्वोत्कृष्टत्वमत्र प्रतीयते तथाऽपि तामसेभ्यो विषयेभ्यः प्रकृष्यते शरीरं प्रकाशरूपेन्द्रियाश्रयत्वात्, तस्मादपि प्रकृष्यन्ते इन्द्रियाणि, ततोऽपि प्रकृष्टं सत्त्वं प्रकाशरूपं, तस्यापि यः प्रकाशकः प्रकाश्यविलक्षणः स चिद्रूप एव भवतीति कुतस्तस्य संहतत्वम् ॥ २४ ॥

### भावागणेशवृत्तिः ।

इदानीं वृत्त्यतिरिक्तस्थिरचित्ताभ्युपगन्तृणामात्मानं दर्शयति—तदसंख्येयेति ।

यद्यपि द्रष्टृदृश्यदर्शनगोचराखिलवासनाचित्रमिव चित्तं तिष्ठति ? अतश्चित्तातिरिक्तपदार्थानां चित्तार्थत्वं संभवति । तथाप्येतत्परार्थं मन्तव्यम् । संहत्यकारित्वादित्यर्थः । अयं हेतुः प्रागेव व्याख्यातः ॥ २४ ॥

---

(१) असंख्येयवासनाविशिष्टं चित्तं परार्थं संहत्यकारित्वात् यथा शयनादयः यः परः स पुरुषः । ननु दृष्टान्ते संहतपरार्थत्वं दृष्टं अनुमितौ तादृश एव परः सिध्यति न त्वसंहत आत्मेति चेत् । मैवम् । संहत्यकारित्वे सामान्यतः परार्थत्वव्याप्तिग्रहात् संहतपरसिद्धौ तस्यापि संहतत्वेन परार्थत्वसिद्धौ अनवस्थाप्रसङ्गेन गौरवादिज्ञानात् असंहतपरसिद्धौ च लाघवादिज्ञानात् तत्सहकृतसामान्यव्याप्तिज्ञानादपि असंहतपरार्थत्वसिद्धेः सामान्यधर्मावच्छिन्नव्याप्यवत्ताज्ञानादपि विशेषधर्मावच्छिन्नलाघवज्ञानादिसहकृतात् विशेषधर्मावच्छिन्नविधेयकानुमितेरभ्युपगमादिति । दृष्टसकलधर्माणामनुमितावबगाहनस्यावश्यकत्वस्वीकारे अनुमितिमात्रोच्छेदापत्तेरिति । चित्तमपि—पा० २ पु० ।

(२) स्वामिन इति पाठान्तरम् । (३) शयनासनादीनामिति पाठान्तरम् ।

(४) परार्थमात्रत्वेनेति पाठान्तरम् ।

### नागोजीभट्टवृत्तिः ।

चित्तातिरिक्तात्मसद्भावे हेत्वन्तरमाह—तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् । असंख्येयाभिः कर्मवासनाभिः क्लेशवासनाभिश्चित्रीकृतमिव चित्तम् । एवं च तासां चित्ताश्रयतया चित्तस्य भोक्तृत्वं योग्यम् । एवं च सर्वं चित्तार्थमेव स्यात्तथापि तादृशमपि चित्तं परार्थमेव । परस्य नित्योदासीनस्य पुरुषस्य भोगार्थमेव न स्वार्थं संहत्यकारित्वात् गृहादिवत् । संहत्यकारित्वं चेतरसाहित्येनार्थक्रियाकारित्वमिति प्रागेव व्याख्यातम् । सत्त्वरजस्तमसां चात्र सहकारिता । एवं च भोक्ता तद्गुणासंश्लिष्टः सिध्यति ॥ २४ ॥

### मणिप्रभा ।

इतश्च चित्तादन्यो भोक्ताऽस्तीत्याह—तदसंख्येयेति ।

यद्यपि क्लेशकर्मविपाकवासनाभिरनन्ताभिः सुखाद्याश्रयतया भोक्तृकल्पं चित्तं तथाऽपि परस्य निरुपचरितचित्स्वभावस्यार्थौ भोगापवर्गौ साधयतीति परार्थं भोग्यमेव न भोक्तेति यावत् । कुतः ? संहत्य देहेन्द्रियादिसहकारिभिर्मिलित्वा भोगादिकार्यकारित्वात् , यन्मिलित्वा कार्यकारि तत्परार्थं, यथा गृहादि, न हि स्तम्भादिभिः संहत्य गृहं स्वस्य वसतिं करोति किं तु परस्मै विष्णुमित्राय । एवं गुणा अपि बुद्ध्यादिकं परार्थं कुर्वन्तीति युक्तमत एव पुरुषशेषत्वाद् गुणा उच्यन्ते । तथा च सत्त्वादयः परार्थाः संहत्य कारित्वाद्गृहवदित्यस्य हेतोः पक्षधर्मतावलाद् गुणैरसंहतः शुद्धो निष्कलः स्वार्थश्चिन्मात्रपरः सिध्यति । यो यस्य भोक्ता स तेनासंहतो यथा गृहस्वामीति व्याप्तेः गुणभोक्तुरपि परार्थत्वेऽनवस्थानात्पुरुषान्न परं किंचिदिति श्रुतेश्च । तस्माद्यस्य भोगापवर्गौ गुणमयबुद्ध्या कर्तव्यौ सुखदुःखाभ्यां योऽनुकूलनीयः प्रतिकूलनीयश्च स भोक्ताऽस्तीति सिद्धम् ॥ २४ ॥

### चन्द्रिका ।

द्रष्टरि प्रमाणमाह—तदसंख्येयेति ।

तदेव चित्तं संख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनो भोक्तुर्भोगापवर्गलक्षणार्थं साधयति, कुतः ? सम्भूय मिलित्वार्थक्रियाकारित्वात् यथा गृहादिः ॥ २४ ॥

### योगसुधाकरः ।

अतश्चान्यो भोक्ता चित्तादस्तीत्याह—तदिति ।

यद्यपि क्लेशकर्मविपाकवासनाभिरनन्ताभिश्चित्रं सुखाद्याश्रयतया भोक्तृकल्पं चित्तम् , तथापि परस्य निरुपचरितचित्स्वभावस्यार्थौ भोगापवर्गौ साधयतीति परार्थं भोग्यमेव न भोक्ता । कस्मात् ? संहत्य देहेन्द्रियादिसहकारिभिर्मिलित्वा भोगादिकार्यकारित्वात् । यन्मिलित्वा कार्यकारि तत्परार्थं यथा गृहादि देवदत्तार्थम् । तस्माच्चित्तादन्यश्चिदात्मा भोक्तास्तीति सिद्धम् ॥ २४ ॥

### भोजवृत्तिः ।

इदानीं शास्त्रफलं कैवल्यं निर्णेतुं दशभिः सूत्रैरुपक्रमते—

## (१)विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २५ ॥

एवं सत्त्वपुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यति अहमस्मादन्य इत्येवंरूपं, तस्य विज्ञातचित्तस्वरूपस्य चित्ते याऽऽत्मभावभावना सा निवर्तते चित्तमेव कर्तृ ज्ञातृ-भोक्तृ इत्यभिमानो निवर्तते॥२५॥

### भावागणेशवृत्तिः ।

तदेवमतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् (४।१२) इत्यादिसूत्रैः चित्तपुरुषयोश्च विवेकतः सत्त्वं परीक्षितम् । इदानीमेतज्ज्ञानादाद्यं मोक्षमादौ प्रतिपादयति—विशेषेति ।

मातृमानमेयात्मकस्याखिलप्रपञ्चस्य तत्तायः पिण्डवदेकीभावापन्नस्यापि यथोक्तप्रकारैरन्योन्यविशेषदर्शिनश्चित्तस्य या पूर्वस्थिताऽऽत्मभावभावना स्वस्वरूपजिज्ञासा किंस्वरूपोऽहमासं, किंस्वरूपो वा ति-

---

(१) सत्त्वपुरुषान्यत्वं साधितमिदानीं तद्दर्शिनं पुरुषामतरेभ्यः पुरुषेभ्यो व्यावर्तयति विशेषेति ।

ष्यामि किंस्वरूपो वा भविष्यामीत्याद्याकारा तस्याः शोकाद्यनन्तानर्थहेतोर्निवृत्तिर्भवतीत्यर्थः। स्वर्गनरकमोक्षादिभिर्विचित्ररूपता चित्तादेरेव भवति न तु सदैकरूपचिन्मात्रस्य ममेत्यवधारणे सति नैवात्मभावचिन्तोदेतीति भावः। तथाच श्रुतिः "तं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवं" इत्यादिरिति ॥ २५ ॥

## नागोजीभट्टवृत्तिः।

अथ मोक्षं प्रतिपादयति—**विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः**। मातृमानमेयात्मकस्याखिलप्रपञ्चस्य तप्तायःपिण्डवदेकीभावापन्नस्यापि यथोक्तप्रकारैरन्योन्याविशेषदर्शिनो विवेकदर्शिनश्चित्तस्य या पूर्वस्थिता आत्मभावभावना स्वसत्ताजिज्ञासा किंस्वरूपोऽहमासं किंरूपो भवामीत्याकारा तस्याः शोकाद्यनन्तानर्थहेतोर्निवृत्तिर्भवतीत्यर्थः। इयमपि भावना कस्यचिदेव पुण्यभागिनोऽनुष्ठिताष्टाङ्गयोगैकदेशस्यैव भवति। अन्यस्य तु कर्मफले मोक्षे च नास्तिकतादृष्ट्याऽरुचिरेव तत्र भवति। तस्य च मोक्षमार्गश्रवणेन रोमहर्षाश्रुपाताभ्यामनुष्ठिताङ्गयोगैकदेशत्वमनुमेयम्। विवेकदर्शिनस्तु स्वर्गनरकादिभिर्विचित्ररूपता चित्तस्यैव नतु सदैकरूपाचिन्मात्रस्य मम, अविद्यया हि अहं चित्तधर्मैः परामृष्टः, तदपगमे तु शुद्ध एवाहमिति जानतो नैवात्मभावभावनोच्चितेति भावः ॥ २५ ॥

## मणिप्रभा।

इयता सूत्रजालेन जन्मादिसिद्धिं, चित्तेषु मोक्षयोग्यचित्तं निर्द्धार्य, कर्मवासनाप्रपञ्चपूर्वकं विज्ञानाभिन्नार्थसाधनेन परलोकादिप्रपञ्चं परलोकिनं च भोक्तारं निरधारयत्। अधुना कैवल्यं निरूपयितुं तद्योग्यमधिकारिणं दर्शयति—विशेषेति।

पूर्वसुकृतबलात्कस्यचित्पुरुषधौरेयस्यात्मभावे तत्त्वे भावना जिज्ञासा भवति क्वाहं कस्य कुतो वेति तस्याधिकारिणः पूर्वोक्तविवेकेन बुद्धेरन्यश्चिन्मात्रः पुरुषोऽहमिति विशेषदर्शिनः तत्त्वजिज्ञासा विनिवर्तते, इच्छायाः स्वविषयलाभनिवर्त्यत्वात्। यस्य तु नास्तिकस्य देहाद्बुद्धेर्वाऽन्यो भोक्ता नास्तीत्यनात्मन्यात्मभावनादार्ढ्यं सोऽनधिकारी, यस्तत्त्वजिज्ञासुः सोऽधिकारीति भावः ॥ २५ ॥

## चन्द्रिका।

इदानीं कैवल्यं निर्णेतुं दशसूत्राणि—विशेषेति।

एवं सत्त्वपुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यति अहमस्मादन्य इत्येवंरूपं तस्य ज्ञाताचित्तस्वरूपस्य चित्ते याऽऽत्मत्वभावना सा निवर्तते चित्तमेव कर्तृ ज्ञातृ भोक्तृ इत्यभिमानो निवर्तते ॥ २५ ॥

## योगसुधाकरः।

इत्थं प्रासङ्गिकं परिसमाप्य अधुना कैवल्यं निरूपयितुं तद्योग्यमधिकारिणं दर्शयति—विशेषेति।

पूर्वोक्तविवेकेन बुद्धेरन्याश्चिन्मात्रः पुरुषोऽहमिति विशेषदर्शिन आत्मभावे तत्त्वे भावना जिज्ञासा विनिवर्तते, ज्ञाते जिज्ञासायोगात्। यस्य पूर्वजन्मसुकृतपरिपाकेण तत्त्वजिज्ञासा जायते, सोऽधिकारीति भावः ॥ २५ ॥

## भोजवृत्तिः।

तस्मिन्सति किं भवतीत्याह—

### (१)तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

यदस्याज्ञाननिम्नपथं बहिर्मुखं विषयोपभोगफलं चित्तमासीत्तदिदानीं विवेकनिम्नमार्गमन्तर्मुखं(२) कैवल्यप्राग्भारं कैवल्यफलं कैवल्यप्रारम्भं वा संपद्यत(३)इति ॥ २६ ॥

---

(१) विशेषदर्शिनश्चित्तं कीदृशं भवतीत्यत आह तदेति। विवेकनिम्नं विवेकमार्गसञ्चारि। कैवल्यप्राग्भारमिति। कैवल्ये प्राग्भारो यस्य तत् कैवल्याभिमुखमिति यावत्।

(२) विवेकनिम्नं विवेकमार्गामिति पाठान्तरम्।

(३) कैवल्यमारम्भं सम्पद्यत इति पाठान्तरम्।

### भावागणेशवृत्तिः ।

आद्यस्तु मोक्षो ज्ञानेनेति पञ्चशिखाचार्यैरपि ज्ञानोत्पत्तिमात्रेणैवैको मोक्ष उक्तः । तस्य विशेषदर्शनलक्षणस्य वक्ष्यमाणमुक्तेश्च कारणं संप्रज्ञातयोगमाह—तदेति ।

तदानीं विशेषदर्शनावस्थायामात्मभावभावनाविनिवृत्त्या विक्षेपशून्यं चित्तं कैवल्यप्राग्भारं कैवल्याभिमुखं सद्विवेकनिम्नं स्वभावादेव विवेकमार्गसंचारि विवेकनिष्ठं भवतीत्यर्थः ॥ २६ ॥

### नागोजीभट्टवृत्तिः ।

तदवस्थायां कीदृशं चित्तं तदाह—तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् । तदानीं विशेषदर्शनावस्थायामात्मभावभावनाविनिवृत्त्या विक्षेपशून्यं चित्तं कैवल्यप्राग्भारं कैवल्याभिमुखं सत् विवेकनिम्नं स्वभावादेव विवेकनिम्नं विवेकमार्गसंचारि विवेकनिष्ठं भवतीत्यर्थः ॥ २६ ॥

### मणिप्रभा ।

ननु तत्त्वजिज्ञासोर्विशेषदर्शनानन्तरं कीदृशं चित्तमित्यत आह—तदेति ।

पूर्वं बुद्ध्यादावात्मभ्रमदशायां यच्चित्तं विषयनिम्नं संसारप्राग्भारमासीत् तदिदानीं निवृत्तभ्रमस्य योगिनश्चित्तं विवेकनिम्नं दृग्दृश्ययोर्भेदो विवेको निम्न आलम्बनभूमिर्यस्य तद्विवेकनिष्ठमिति यावद् अत एव कैवल्यं प्राग्भारोऽवधिर्यस्य तत्कैवल्यप्राग्भारं कैवल्यफलावसानं धर्ममेघाख्यध्यानरतं भवतीत्यर्थः २६॥

### चन्द्रिका ।

तस्मिन् सति किं भवतीत्याह—तदेति ।

यदस्याज्ञाननिम्नं बहिर्मुखं विषयभोगफलं चित्तमासीत्तदिदानीं विवेकनिम्नं विवेकमार्गमन्तर्मुखं कैवल्यप्राग्भारं कैवल्यफलं कैवल्यप्रारम्भं वा सम्पद्यत इति ॥ २६ ॥

### योगसुधाकरः ।

ननु तत्त्वजिज्ञासोर्विशेषदर्शनानन्तरं चित्तं कीदृशं भवतीत्यपेक्षायामाह—तदेति ।

पूर्वं बुद्ध्यादावात्मत्वभ्रमदशायां यच्चित्तं विषयनिम्नं संसारप्राग्भारमासीत्, तदिदानीं निवृत्तभ्रमस्य योगिनश्चित्तं विवेकनिम्नं द्रष्टृदृश्ययोर्विवेको निम्नमालम्बनभूमिर्यस्य तत्; विवेकनिष्ठमिति यावत् । अत एव कैवल्यं प्राग्भारोऽवधिर्यस्य तत्कैवल्यप्राग्भारं कैवल्यफलावसानं भवतीत्यर्थः ॥ २६ ॥

### भोजवृत्तिः ।

अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्ति तेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह—

## तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

तस्मिन्समाधौ स्थितस्य च्छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि तानि प्राग्भूतेभ्यः(१) व्युत्थानानुभवजेभ्यः संस्कारेभ्योऽहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति अन्तःकरणोच्छित्तिद्वारेण तेषां हानं कर्तव्यमित्युक्तं भवति ॥ २७ ॥

### भावागणेशवृत्तिः ।

ननु विशेषदर्शिनः संप्रज्ञातेन किं प्रयोजनमित्याकाङ्क्षायां सूत्रमिदं प्रवर्तते—तच्छिद्रेष्विति ।

कोमलकण्टकन्यायेन विशेषदर्शने जातेऽपि विशेषदर्शनावसरे प्रत्ययान्तराणि मिथ्याज्ञानरूपाणि जायन्ते । कुतः ? संस्कारेभ्यः । अनादिकालसंचितस्य दृढतरसंस्कारस्य चिरस्थायित्वात् ॥ २७ ॥

### नागोजीभट्टवृत्तिः ।

नन्वेवं विशेषदर्शिनः संप्रज्ञातेन न प्रयोजनमत आह—तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः । कोमलकण्टकन्यायेन विशेषदर्शने जातेऽपि तदवसरे तदन्तरालेषु अहंममेत्यादिप्रत्ययान्तराणि मिथ्याज्ञानरूपाणि जायन्ते क्षीयमाणेभ्योऽपि प्राग्भवीयसंस्कारेभ्यस्तदर्थं संप्रज्ञात आवश्यक इति भावः ॥ २७ ॥

---

(१) प्राक्तनेभ्य इति पाठान्तरम् ।

### मणिप्रभा ।

नन्वीदृशस्य चित्तस्याहंममेतिव्युत्थानप्रत्ययाः कुतो भवन्तीत्यत आह—तच्छिद्रेष्विति ।

विवेकख्यातिरूपप्रसंख्यानपरस्याप्यहं क्षीयमाणेभ्यो व्युत्थानसंस्कारेभ्यः प्रसंख्यानच्छिद्रेष्वभिव्य-क्तेभ्यः प्रत्ययान्तराणि व्युत्थानरूपाणि भवन्तीत्यर्थः ॥ २७ ॥

### चन्द्रिका ।

अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्ति तेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह—तच्छिद्रेष्विति ।

तस्मिन् समाधौ स्थितस्य छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि तानि प्राक्तनेभ्यो व्युत्थानानुभवजेभ्यः संस्कारेभ्योऽहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति अतः कार-णोच्छित्तिद्वारेण तेषां हानं कर्तव्यमित्युक्तं भवति ॥ २७ ॥

### योगसुधाकरः ।

यद्येवं तदास्य व्युत्थानप्रत्ययाः कुतो भवन्तीत्यत आह—तच्छिद्रेष्विति ।

विवेकख्यातिपरस्यानुक्षणं क्षीयमाणेभ्यो व्युत्थानसंस्कारेभ्यो विवेकख्यातिच्छिद्रेष्वभिव्यक्तेभ्यः प्रत्ययान्तराणि भवन्तीत्यर्थः ॥ २७ ॥

### भोजवृत्तिः ।

हानोपायश्च पूर्वमेवोक्त इत्याह—

## (१)हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तं तथा संस्काराणामपि कर्तव्यम् । यथा ते ज्ञानाग्निना प्लुष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते तथा संस्कारा अपि ॥ २८ ॥

### भावागणेशवृत्तिः ।

सति चित्ते तदुन्मूलनमशक्यं तत्राह—हानमिति ।

तेषां संस्काराणां हानं तु पूर्वाचार्यैः क्लेशानामिवोक्तम् । यथानागताः क्लेशाः ज्ञानाग्निना दह्यन्त एवं तेषामत्यन्तोच्छेदस्तच्चित्तेन सहैवेति ॥ २८ ॥

### नागोजीभट्टवृत्तिः ।

नन्वनादिकालसंचितस्य दृढतरसंस्कारस्य कथमुन्मूलनमत आह—हानमेषां क्लेशवदुक्तम् । यथा परिपक्वविज्ञाने दग्धबीजसदृशाः क्लेशा विवेकाच्छिद्रसमुत्पन्ना अपि न संस्कारान्तरं जनयन्ति तथा तेनैव दग्धबीजभावं प्रापिता व्युत्थानसंस्कारा न अन्तरान्तरा प्रत्ययं जनयन्ति । एवं विवेकसंस्कारा निरोधसंस्कारैर्निरोद्धव्याः । परवैराग्यलक्षणज्ञानसंस्कारास्तु चित्तेन सह लीयन्ते इति दिक् ॥ २८ ॥

### मणिप्रभा ।

ननु सत्यपि प्रसंख्याने व्युत्थानसंस्काराः कार्यायोत्तिष्ठन्ति चेत्, कस्तेषां हानोपाय इत्यत आह—हानमिति ।

अविद्यारागादिक्लेशाः क्रियायोगतनूकृताः तत्तदवसरलब्धप्रसराः प्रसंख्यानदहनदग्धाः पुनश्चित्ते सं-स्कारं न प्रसुवते । एवं व्युत्थानसंस्कारा अपि विवेकख्यात्यपरिपाकदशायां प्रत्ययान्तराणि कुर्वाणाः परिपक्वप्रसंख्यानदहनदग्धात्मबीजभावा न प्रसवधर्माणो भवन्तीति क्लेशवदेषां हानमुक्तं वेदितव्य-मित्यर्थः ॥ २८ ॥

---

(१) ननु ज्ञाने जातेऽपि यदि पूर्वसंस्कारवशात् व्युत्थानसंस्काराः प्रत्ययान्तराणि प्रसुवते कथं तर्हि सम्प्रज्ञातप्रवाहेणापि अविद्यानिवृत्तिः स्यादतस्तद्धानोपायमाह हानमिति । यथा संस्काराणां हानं स्वकार्यासामर्थ्यं क्लेशानामिवोक्तं "ध्यानहेयास्तद्वृत्तयः । ते प्रतिप्रसवहेयाः सूक्ष्माः" इतिसूत्राभ्यां यथा स्थूलसूक्ष्मक्लेशाना दाहनाशौ प्रोक्तौ तथा तत्संस्काराणामपीति फलितार्थः ।

### चन्द्रिका ।

हानोपायः पूर्वमेवोक्त इत्याह —**हानमिति** ।

यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तं तथा संस्काराणामपि कर्तव्यम् । यथा ते ज्ञानाग्निना स्पृष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते तथा संस्कारा अपि ॥ २८ ॥

### योगसुधाकरः ।

ननु कोऽयमेतेषां संस्काराणां हानोपाय इत्यत्राह—**हानमिति** ।

यथाविद्यादिक्लेशा विवेकख्यात्या दग्धाः पुनः संस्कारं न प्रसुवते, तथा व्युत्थानसंस्कारा अपि पुरुषख्यातिदग्धा अप्रसवधर्माणो भवन्तीत्यर्थः ॥ २८ ॥

### भोजवृत्तिः ।

एवं प्रत्ययान्तरानुदयेन स्थिरीभूते समाधौ यादृशस्य योगिनः(१) समाधिप्रकर्षप्राप्तिर्भवति तथाविधमुपायमाह—

## (२)प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः २९

प्रसंख्यानं यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणस्वरूपविभावनं तस्मिन्सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये(३) सर्वप्रकारविवेकख्यातेः परिशेषाद्धर्ममेघः समाधिर्भवति । प्रकृष्टमशुक्लकृष्णं धर्मं परमपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः । अनेन प्रकृष्टधर्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २९ ॥

### भावागणेशवृत्तिः ।

संप्रज्ञातपरम्परयापि यथा प्रत्ययान्तराणि तच्छिद्रेषु नोत्पद्यन्ते तदाह द्वाभ्याम्—**प्रसंख्यान इति** ।

प्रसंख्यानं विवेकसाक्षात्कारस्तत्रापि योऽकुसीदो वार्धुषिकवत्सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तस्य योगविघ्नाभावेन सर्वथा निरन्तरं विवेकख्यात्युदयाद्धर्ममेघनाम्नी संप्रज्ञातस्य पराकाष्ठा भवतीत्यर्थः । उत्तमं योगजधर्मं मेहति वर्षतीति धर्ममेघः ॥ २९ ॥

### नागोजीभट्टवृत्तिः।

व्युत्थाननिरोधोपायं विवेकज्ञानमुक्त्वा तन्निरोधोपायमाह—**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः** । प्रसंख्यानं विवेकसाक्षात्कारस्तत्रापि योऽकुसीदः वार्धुषिकवत्सर्वभावाधिष्ठातृरूपां सिद्धिं न प्रार्थयते तदा तस्य योगविघ्नाभावेन सर्वथा निरन्तरविवेकख्यातेरेवोदयः संस्कारबीजक्षयाच्च न प्रत्ययान्तराणि तदा धर्ममेघनाम्नी सम्प्रज्ञातस्य पराकाष्ठा भवतीत्यर्थः । उत्तमं योगजधर्मं मेहति वर्षतीति धर्ममेघः ॥ २९ ॥

### मणिप्रभा ।

एवं प्रसंख्यानेन व्युत्थानस्य निरोधमुक्त्वा प्रसंख्यानस्यापि निर्बीजयोगापेक्षया व्युत्थानरूपस्य निरोधोपायमाह—**प्रसंख्यान इति** ।

षड्विंशतितत्त्वान्यालोचयतः सत्त्वपुरुषान्यताख्यातिर्या जायते सर्वाधिष्ठातृत्वाद्यवान्तरफला तत् प्रसंख्यानम् , तत्राप्यकुसीदस्य कुत्सितेषु विषयेषु सीदतीति कुसीदो रागः तद्रहितस्य सर्वात्मना विवे-

---

( १ ) यादृशोऽस्य योगिन इति पाठान्तरम् ।

( २ ) तदेवं व्युत्थाननिरोधोपायं प्रसंख्यानमुक्त्वा प्रसंख्याननिरोधोपायमाह प्रसंख्यान इति । प्रसंख्यानात् न किञ्चित् सर्वभावाधिष्ठातृत्वादिकं प्रार्थयते प्रत्युत परिणामित्वदोषदर्शनेन तत्र विरक्तः तन्निरोधमिच्छन् धर्ममेघं समाधिमुपासीत तदुपासेन च सर्वथा विवेकख्यातिर्भवतीति तन्निरोद्धुं पारयतीति भावः ।

( ३ ) अनुदयादिति पाठान्तरम् ।

ख्यातिरेव सन्ततिरूपो धर्ममेघसंज्ञः समाधिर्भवति। स च खल्वशुक्लकृष्णं धर्मं कैवल्यफलं मेहति सिञ्चतीति धर्ममेघ इत्युच्यते। प्रसंख्याने वैराग्याद्धर्ममेघे सति परवैराग्योदयात्प्रसंख्यानस्य निरोधो भवतीति भावः ॥ २९ ॥

**चन्द्रिका।**

एवं प्रत्ययान्तरानुदयेन स्थिरीभूते समाधौ यादृशस्य योगिनः समाधिप्रकर्षप्राप्तिर्भवति तथाविधमुपायमाह—**प्रसंख्यान इति।**

प्रसंख्यानं यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणस्वरूपपरिभावनं तस्मिन् सत्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकारविवेकख्यातेः परिशेषाद्धर्ममेघः समाधिर्भवति प्रकृष्टमशुक्लकृष्णं धर्मं परपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः। अनेन प्रकृष्टस्य धर्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २९ ॥

**योगसुधाकरः।**

अथ विवेकख्यातेरपि व्युत्थानरूपतया तन्निरोधोपायमुपदर्शयितुमाह—**प्रसंख्यान इति।**

विवेकख्यातिरेव विशोकरूपावान्तरफलोन्मुखी सती प्रसंख्यानमित्युच्यते। तत्रापि अकुसीदस्य, कुत्सितेषु विषयेषु सीदतीति कुसीदो रागः, तद्रहितस्य विरक्तस्य, अत एव सर्वथा सर्वात्मना विवेकख्यातेः योगिनः अशुक्लकृष्णं धर्मं कैवल्यफलं मेहति सिञ्चतीति धर्ममेघाख्यः समाधिर्भवतीत्यर्थः ॥ २९ ॥

**भोजवृत्तिः।**

तस्माद्धर्ममेघात्किं भवतीत्यत आह—

## ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

क्लेशानामविद्यादीनामभिनिवेशान्तानां कर्मणां च शुक्लादिभेदेन त्रिविधानां ज्ञानोदयात्पूर्वपूर्वकारणनिवृत्त्या निवृत्तिर्भवति ॥ ३० ॥

**भावागणेशवृत्तिः।**

ततः किमित्यत आह—**तत इति।**

ततो धर्ममेघसमाधेर्हेतोर्द्रष्टृद्वारा क्लेशकर्मणो निवृत्तिर्दाहो भवति। क्लेशकर्मणी कदापि नोत्पद्येते इत्यर्थः। क्लेशा अविद्यादयः पञ्च कर्म अदृष्टम्। एतत्सूत्रोक्तो ज्ञाननिष्पत्तिकार्यो द्वितीयो मोक्षः पञ्चशिखाचार्यैरप्युक्तः—'द्वितीयो रागसंक्षयादि'ति। रागः क्लेशसामान्योपलक्षकः ॥ ३० ॥

**नागोजीभट्टवृत्तिः।**

तत्फलमाह—ततः क्लेशकर्मनिवृत्तिः। ततो धर्ममेघात्समाधेर्हेतोः क्लेशानामविद्यादीनां पञ्चानां कर्मणः अदृष्टस्य निवृत्तिर्दाहो भवति। क्लेशकर्मणी कदापि नोत्पद्येते इत्यर्थः। अस्यामवस्थायां जीवन्मुक्त उच्यते। कारणाभावेन पुनर्जन्मादर्शनादिति बोध्यम् ॥ ३० ॥

**मणिप्रभा।**

इमं क्रमं स्फुटयति **तत इति।**

ततो धर्ममेघात् क्लेशानां पञ्चानां सवासनानां तन्मूलानां कर्मणां च निवृत्तिर्भवतीत्यर्थः ॥ ३० ॥

**चन्द्रिका।**

तस्माद्धर्ममेघात् किं भवतीत्यत आह—**तत इति।**

क्लेशानामविद्यादीनामभिनिवेशान्तानां कर्मणां च शुक्लादिभेदेन त्रिविधानां ज्ञानोदयात् पूर्वपूर्वकारणनिवृत्त्या निवृत्तिर्भवतीत्यर्थः ॥ ३० ॥

**योगसुधाकरः।**

ततः किमित्यत आह—**तत इति।**

ततो धर्ममेघात्सवासनक्लेशमूलकर्मणो निवृत्तिर्भवतीत्यर्थः ॥ ३० ॥

### भोजवृत्तिः ।

तेषु निवृत्तेषु किं भवतीत्यत आह—

**तदा सर्वावरणमलापेतस्य(१) ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥**

आव्रियते चित्तमेभिरित्यावरणानि क्लेशास्त एव मलास्तेभ्योऽपेतस्य तद्विरहितस्य ज्ञानस्य शरद्गगननिभस्याऽऽनन्त्यादनवच्छेदात् ज्ञेयमल्पं गणनास्पदं न भवति(२) अक्लेशेनैव सर्वं ज्ञेयं जानातीत्यर्थः ॥ ३१ ॥

### भावागणेशवृत्तिः ।

उक्तस्य जीवन्मुक्तस्य तृतीयं परममोक्षमुपपत्त्या सहाह सूत्राभ्याम्—तदेति ।

तदा जीवन्मुक्तावस्थायां सर्वयोः क्लेशकर्मणोर्ज्ञानावरकमलयोरपगमनहेतुना ज्ञानस्य सत्त्वप्रकाशस्यानन्त्याद्विभुत्वाद्व्यापकत्वाज्ज्ञेयं तत्प्रकाश्यमल्पं तदपेक्षया भवति । यदि हि पञ्चविंशतितत्त्वातिरिक्तमन्यदपि वस्तु तिष्ठेत्तदा तदपि प्रकाशयेत । ज्ञेयस्यैव स्वल्पतयाऽल्पं प्रकाश्यते नतु स्वस्याल्पतयेत्यर्थः ३१॥

### नागोजीभट्टवृत्तिः ।

धर्ममेघे सति यादृशं चित्तं तदाह–**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ।** आवरणं रजस्तमसी, मलाः क्लेशकर्माणि तैः सर्वप्रकारैरपेतस्य विमुक्तस्य ज्ञानस्य चित्तसत्त्वस्यानन्त्याज्ज्ञेयमल्पं भवतीत्यर्थः । पूर्वं हि तमसाभिभूतं सत्त्वं क्वचिदेव रज उद्घाट्य प्रवर्तितं ग्रहणसमर्थं भवति । सर्वमलापगमे हि सर्वस्य युगपदशेषविशेषतो ज्ञातत्वात्सर्वतो विरक्तं चित्तं विवेकसाक्षात्कारेऽपि किंबहुनात्मसाक्षात्कारेऽपि विरक्तं भवतीति भावः । इदमेव ज्ञेयस्याल्पत्वं यद्वैराग्यविषयत्वं, तस्मिंश्च सर्वचित्तवृत्तिनिरोध इति तत्त्वम् । तदवस्थेनापि देहाद्यारम्भे इदमपि सत्यं स्यात्—अन्धो मणिमविध्यत् तमनङ्गुलिरग्रथत् । अग्रीवस्तं कण्ठे धृतवान् तमजिह्वोऽस्तौदिति ॥ ३१ ॥

### मणिप्रभा ।

तदेति । आवृण्वन्ति चित्तमित्यावरणा रजस्तमोमयाः क्लेशकर्मरूपा मलाः सर्वे ते आवरणाश्च मलाश्च सर्वावरणमलाः तैर्धर्ममेघध्यानेनापेतस्य ज्ञानस्य शुद्धबुद्ध्यालोकस्यानन्त्याज्ज्ञेयं चेतनाचेतनात्मकं सर्वमल्पमेव भवति, यथा शरदि अशेषघनादिमलापेते नभसि सर्वतः प्रद्योतमानप्रचण्डमार्तण्डप्रकाशपटले घटादयः प्रकाश्या अल्पा भवन्ति तद्वदत्यन्तनिर्मलस्य बुद्धिसत्त्वस्य प्रकाशस्य किंनाम यन्न गोचर इति भावः । सेयं धर्ममेघस्य परा काष्ठा दर्शिता, अत एव धर्मानवाभियन्त इति व्युत्पत्त्या सर्वानेव ज्ञेयान्मेहति प्रकाशयत्यपि धर्ममेघ इत्याह, अयमेव हि धर्ममेघपरिपाको ज्ञानप्रसादः करतलीकृतामलकवत्पुरुषं निर्दोषमपरोक्षीकुर्वन्निर्मलजलान्तर्मत्स्यानिव जडाविशुद्धप्रकृतिविकारदृश्यविषयान्तर्गताशुद्धिविनाशादिदोषान् प्रकटयन् चित्ततपस्विनो निर्बीजयोगाख्यां निधिमापादयन् परवैराग्यमित्युच्यते ॥ ३१ ॥

### चन्द्रिका ।

निवृत्तेषु किं भवतीत्यत आह—तदेति ।

आव्रियते चित्तमेभिरित्यावरणानि क्लेशास्तेभ्योऽपेतस्य तद्विरहितस्य ज्ञानस्य शरद्गगनप्रतिमस्यानन्त्यादनवच्छेदाज्ज्ञेयमल्पं गणनास्पदं भवति अक्लेशेनैव सर्वं जानातीत्यर्थः ॥ ३१ ॥

### योगसुधाकरः ।

तदा किं भवतीत्यत्राह—तदेति ।

---

(१) सर्वावरणापेतस्येति प्रथमद्वितीयपुस्तकयोः पाठः । धर्ममेघे सति चित्तं कीदृशं भवतीत्यत आह तदेति । तस्यामवस्थायां क्लेशकर्मणोर्ज्ञानावरकमलयोः अपगमेन ज्ञानस्य सत्त्वप्रकाशस्य आनन्त्यात् विभुत्वात् ज्ञेयं प्रकाश्यं तदपेक्षया अल्पं भवतीत्यर्थः ।

(२) गणनास्पदं भवतीति पाठान्तरम् ।

आवृण्वन्ति चित्तमित्यावरणा रजस्तमोमयाः क्लेशकर्मरूपा मलाः, सर्वे च ते आवरणमला तैर्धर्ममेघेणापेतस्य ज्ञानस्य विशुद्धबुद्ध्यालोकस्यानन्त्याज्ज्ञेयं सर्वं गगने खद्योतवदल्पमेव भवतीत्यर्थः ॥ ३१ ॥

## भोजवृत्तिः ।

ततः किमित्यत आह—

**ततः (१)कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥**

कृतो निष्पादितो भोगापवर्गलक्षणः पुरुषार्थः प्रयोजनं यैस्ते कृतार्था गुणाः सत्त्वरजस्तमांसि तेषां परिणाम आ पुरुषार्थसमाप्तेरानुलोम्येन चाङ्गाङ्गिभावः स्थितिलक्षणस्तस्य योऽसौ क्रमो वक्ष्यमाणस्तस्य परिसमाप्तिर्निष्ठा न पुनरुद्भव इत्यर्थः ॥ ३२ ॥

## भावागणेशवृत्तिः ।

ततः किमित्यत आह—तत इति ।

ततो ज्ञानस्यानन्त्यात्परवैराग्येण कृतार्थानां समाप्तपुरुषार्थानां गुणानां सत्त्वादीनां प्रकृत्याख्यानां परिणामक्रमः समाप्यते । पुरुषाणां भोगौपयिकः परिणामः पुनर्न भवतीत्यर्थः । क्रमश्चाविरला धारेत्युत्तरसूत्रे वक्ष्यते : अत्र सार्वज्ञ्यानन्तरं मुक्तिरिति राजमार्गाभिप्रायेणैवोक्तं नत्वयं नियमः । अनीश्वरस्यासर्वज्ञस्याप्यभिमाननिवृत्त्यैव कैवल्यस्य भाष्यकृता व्याख्यातत्वात् तृतीयपादान्त्यसूत्र इति ॥३२॥

## नागोजीभट्टवृत्तिः ।

ततः किं तत्राह—**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्** । ततः परवैराग्यानन्तरं कृतार्थानां समाप्ततत्पुरुषार्थानां गुणानां सत्त्वादीनां प्रकृत्याख्यानां तत्पुरुषं प्रति परिणामक्रमः समाप्यते । कृतार्थपुरुषभोगौपयिकः परिणामः पुनर्न भवतीत्यर्थः । क्रमश्चोत्तरसूत्रे वक्ष्यते । अत्र सार्वज्ञ्यानन्तरं मुक्तिरवश्यं भवत्येवेत्यभिप्रायेणोक्तं नत्वयं नियमः । अनीश्वरस्यासर्वज्ञस्यापि अभिमाननिवृत्त्यैव कैवल्यस्य भाष्यकृता तृतीयपादान्त्यसूत्रे उक्तत्वादिति दिक् ॥ ३२ ॥

## मणिप्रभा ।

नन्विदं परवैराग्यं क्लेशान्समूलकाषं कषत् कुशलाकुशलांश्च कर्माशयान् समूलघातं निहन्तुमुत्सहताम्; तथाऽपि गुणानां स्वतः परिणामशीलत्वात् तादृशमपि पुरुषं प्रति देहेन्द्रियाणि परिणामक्रमोऽनुवर्ततामिति तत्राह—**तत इति ।**

ततो धर्ममेघफलीभूतपरवैराग्यात्मकानन्तज्ञानानन्तरं गुणानां भोगविवेकख्यातिरूपपुरुषार्थकरणात्प्राग् यः परिणामानां महदादिघटान्तानां सृष्टावानुलोम्येन, प्रलये घटः पृथिव्यां लीयते, पृथिव्यप्सु; आपस्तेजसीत्यादि प्रातिलोम्येन च क्रम आसीत् तस्य परिसमाप्तिरेव तं पुरुषं प्रति गुणानां पुरुषार्थत्वादनागताध्वा हि पुरुषार्थो गुणानां प्रवर्त्तकस्तस्मिन् कृते गुणा न क्षणमपि स्थातुमुत्सहन्त इति भावः ॥ ३२ ॥

## चन्द्रिका ।

ततः किमित्यतआह—**कृतार्थानामिति ।**

कृतो निष्पादितो भोगापवर्गलक्षणः पुरुषार्थो यैस्ते कृतार्था गुणाः सत्त्वरजस्तमांसि तेषां परिणामः आपुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येन चाऽङ्गाऽङ्गिभावस्थितिलक्षणस्तस्य योऽसौ क्रमो वक्ष्यमाणस्तस्य परिसमाप्तिर्निष्ठा न पुनरुद्भवतीत्यर्थः ॥ ३२ ॥

---

( १ ) ततः इति नास्ति क्वचित् पाठः । ननु गुणाः स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति न देहादिकमारभन्त इत्यत आह कृतार्थानामिति । धर्ममेघोदयात् क्लेशकर्मनिवृत्त्या ज्ञानस्यानन्त्ये सति पुरुषार्थसमाप्त्या कृतार्थान् पुरुषान् प्रति गुणानां सत्त्वादीनां परिणामक्रमः समाप्यते कृतार्थपुरुषाणां भोगौपयिकः परिणामः पुनर्न भवतीत्यर्थः ।

## योगसुधाकरः ।

ततः किमित्यत्राह—तत इति ।

ततो धर्ममेघफलीभूतपरवैराग्यात्मकानन्तज्ञानानन्तरं विवेकख्यातौ निरुद्धायाम् , कृतार्थानां कृतो निष्पादितोऽर्थो भोगापवर्गरूपः पुरुषार्थो यैस्ते तथोक्तास्तेषां सत्त्वादिगुणानां महदाद्यहंकारक्रमेण यः परिणामक्रमः तस्य समाप्तिर्भवतीत्यर्थः ॥ ३२ ॥

## भोजवृत्तिः ।

क्रमस्योक्तस्य लक्षणमाह—

**(१)क्षणप्रतियोगी परिणामापरान्त(२)निर्ग्राह्यः क्रमः ॥ ३३ ॥**

क्षणोऽल्पीयान्कालस्तस्य योऽसौ प्रतियोगी क्षणविलक्षणः(३) परिणामापरान्तनिर्ग्राह्योऽनुभूतेषु क्षणेषु पश्चात्संकलनबुद्ध्यैव यो गृह्यते स क्षणानां क्रम उच्यते, न ह्यननुभूतेषु क्षणेषु क्रमः परिज्ञातुं शक्यः ॥ ३३ ॥

## भावागणेशवृत्तिः ।

ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः स चायमर्थः कथं क्रमशब्दाल्लभ्यते ? क्रमशब्दस्य पौर्वापर्यमात्रवाचित्वादित्याशयेन क्रमशब्दार्थमाह —क्षणेति ।

क्षणप्रतियोगी क्षणस्याप्यवसरस्य विरोधिक्षणेनाप्यनन्तरित इति यावत् । एवंरूपोऽयं क्रमो विवक्षितो न तु पौर्वापर्यमात्रमिति विशेष्यदलार्थः । परिणामश्च पूर्वधर्माप्यये धर्मान्तरोत्पत्तिरित्युक्तम् । ईदृशक्रमे प्रमाणान्तरं दर्शयति—परिणामापरान्तनिर्ग्राह्य इति । वस्त्रादिरूपस्य परिणामस्य पूर्वोन्तापेक्षयाऽपरान्तेन चरमावस्थयाऽनवच्छिन्नपरिणामधारानुमीयत इत्यर्थः । वस्त्रादेर्हि दृश्यमाना विनश्यदवस्थाऽवयवापचयादिपरम्परयैवानुभूयते । तस्मिंश्चापचयोपचयादिरूपपरिणामे कालविशेषहेतुताया दुर्वचत्वेन लाघवात् लक्षणत्वेनैव हेतुतावधार्यते । अतः सुवर्णाद्यखिलवस्तुष्वपि वस्त्रादिदृष्टान्तेन प्रतिक्षणमनवच्छिन्ना परिणामधारानुमीयत इत्यस्मिन्सूत्रे भाष्यकृता सृष्ट्यादिप्रवाहस्यात्यन्तोच्छेदो नास्तीति सिद्धान्तितम् । तथाच विष्णुपुराणमपि—

अनादिर्भगवान्कालो नान्तोऽस्य द्विज ! विद्यते ।<br>
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥ इति ॥ ३३ ॥

## नागोजीभट्टवृत्तिः

ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः स चायमर्थः कथं क्रमशब्दाल्लभ्यते तस्य पौर्वापर्यमात्रवाचित्वादत आह—**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः** । क्षणप्रतियोगी क्षणः प्रतियोगी प्रतिसम्बन्धी यस्य सः क्षणप्रचयाश्रयः स एवात्र क्रमो विवक्षितो न तु पौर्वापर्यमात्रमित्यर्थः । परिणामश्च पूर्वधर्मापाये धर्मा-

---

(१) ननु पूर्वसूत्रे परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः स चायमर्थः कथं क्रमशब्दार्थमाह क्षणेति । क्षणप्रतियोगी क्षणेनाप्यनन्तरितः क्रमशब्देन विवक्षितः । तथा च क्षणाव्यवहितपरिणामधारा पूर्वसूत्रस्थपरिणामक्रमशब्दार्थः । परिणामश्च पूर्वधर्मापाये धर्मान्तरोत्पत्तिः । अस्मिन् क्रमे प्रमाणप्रदर्शकं परिणामापरान्तनिर्ग्राह्य इति विशेषणम् । तथा हि नवस्य वस्त्रस्य सुयत्नरक्षितस्यापि चिरेण पुराणता दृश्यते सोऽयं परिणामस्य अपरान्तः पर्यवसानं तेन च पूर्वान्तापेक्षया वस्त्रस्य परिणामस्यापरान्तेन अनवच्छिन्नपरिणामधारा अनुमीयते वस्त्रस्यान्तकाले दृश्यमानायाः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलादिरूपैः परिणामक्षणेषु अविरलः क्रमोऽनुमीयत इति भावः ।

(२) परिणामोऽपरान्तेति पाठान्तरम् । (३) प्रतियोग्येकलक्षणाविलक्षण इति पाठान्तरम् ।

न्तरोत्पत्तिः। ईदृशक्रमे प्रमाणमाह—परिणामापरान्तनिर्ग्राह्यः वस्त्रादिरूपपरिणामस्यापरान्तेन चरमावस्थयाऽनवच्छिन्नपरिणामधारानुमीयत इत्यर्थः। वस्त्रादेर्हि दृश्यमाना खिनश्यदवस्थाऽवयवापचयपरम्परयैवानुभूयते। वृक्षादेरुपचयोऽप्येवम्। तस्मिन्नोपचयापचयादिरूपे परिणामे कालविशेषहेतुताया दुर्वचत्वेन लाघवात्क्षणत्वेनैव हेतुतावधार्यते। अतः सुवर्णाद्यखिलवस्तुष्वपि वस्त्रादिदृष्टान्तेन प्रतिक्षणमनवाच्छिन्नां परिणामधाराऽनुमीयते। प्रधानकार्यगतः परिणामक्रम एव प्रधानस्यापि नतु स्वतस्तस्य सोऽस्ति। परिणममाणेऽपि तस्मिन् विघाताभावाच्च तस्य नित्यत्वम्। अत एव परिणामिनित्यं तत्। कूटस्थनित्यस्तु पुरुषस्तेषु बद्धेषु चित्ताव्यतिरेकाभिमानात्तत्परिणामे परिणामाध्यासः। मुक्तेषु तु न सोऽपि। अत्र भाष्यकृता सृष्ट्यादिप्रवाहस्यात्यन्तोच्छेदो नास्ति अनन्तत्वाज्जीवानामिति सिद्धान्तितम्। विष्णुपुराणेऽपि

अनादिर्भगवान्कालो नान्तोऽस्य द्विज ! विद्यते।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥ इति॥ ३३॥

## मणिप्रभा।

क्रमशब्दार्थमाह—क्षणेति।

क्षणाः कलांशास्तेषु समाहितबुद्धिना क्रमो ज्ञेयः। तत्र क्षणप्रतियोगी क्रम इति स्वरूपनिर्देशः। क्षणौ प्रतियोगिनौ निरूपकौ यस्य स क्षणप्रतियोगी। एवं क्षणिकपरिणामक्रमो मन्तव्यः। तत्र प्रमाणमाह —परिणामापरान्तनिर्ग्राह्य इति। मृदि पिण्डघटकपालचूर्णकणानां प्रत्यक्षपरिणामानां पूर्वान्तः पिण्ड अपरान्तः कण, इति पूर्वोत्तरावधिग्रहणेन क्रमो निश्चित्य ग्राह्यो भवति, पिण्डानन्तरं घट इति क्रमोऽत्र प्रत्यक्षः। क्वचित्सुरक्षितवस्त्रादौ पुराणतादर्शनेन पूर्वान्तनवत्वपरिणाममारभ्य क्षणे क्षणे पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलतरस्थूलतमत्वेन जायमानाया भेदं ज्ञात्वा नवत्वानन्तरं सूक्ष्मतमपुराणता तदनन्तरं सूक्ष्मतरपुराणतेति क्रमोऽनुमेय इत्यर्थः। नन्वयं क्रमः किमनित्येष्वेवास्ति उत नित्येष्वपीति प्रश्नश्चेदस्ति नित्येष्वपीति वदामः। तत्र नित्या द्विविधाः। कूटस्थनित्याः पुरुषाः, परिणामिनित्या गुणाः। यस्मिन् धर्मिणि धर्मलक्षणावस्थाभिः परिणम्यमाने स्वरूपं न विहन्यते तत्परिणामिनित्यता। तत्रानित्येषु बुद्ध्यादिषु धर्मिषु रागादिपरिणामक्रमस्य पूर्वान्तभावेऽप्यपरान्तः पुरुषसाक्षात्कारोऽस्तीति क्रमः तेषु सावधिकः, गुणेषु परिणामिनित्येषु परिणामक्रमो निरवधिकः, मुक्तपुरुषाम्प्रत्युपरमेऽपि बद्धान्प्रत्यविच्छेदात्। न तु सर्वे पुरुषा मुच्यन्ते न वा। आद्ये, प्रधाने परिणामः सावधिकः। द्वितीये, तच्छूज्ञानाविश्रम्भ इति। तत्राहुः साङ्ख्याचार्याः। अस्ति त्रिविधः प्रश्नः। एकान्तवचनीयः, विभज्यवचनीयः, अवचनीयश्चेति। तत्राद्यो यथा। किमयं सर्वजातो मरिष्यतीति प्रश्नः, स एकान्तेन वक्तव्यः मरिष्यत्येवेति। त्वया कृतस्तु द्वितीयः, स विभज्य वक्तव्यः, यस्य तत्त्वख्यातिः स मुच्यते नान्य इति। एवं च जन्तूनामानन्त्यात्पुराणादौ सर्गप्रलयानन्त्यश्रवणाच्च न सर्वमुक्तिः। तृतीयस्तु प्रधानपरिणामक्रमः समाप्यते नवेति प्रश्नः। अयमुत्तरानर्हः, अशक्यावधारणत्वात्। यद्वा, कुशलस्यान्तवान्संसारक्रमः अकुशलस्य नेति व्याकरणीयोऽयं प्रश्न इति। तस्मात्सदा परिणामिषु नित्येषु गुणेषु क्रमवत्परिणामभेदादस्ति क्रमः, कूटस्थनित्येषु पुरुषेषु बुद्ध्यादिपरिणामाभेदारोपात्कल्पितः क्रमो न वास्तव इति सर्वमवदातम्॥ ३३॥

## चन्द्रिका।

क्रमस्योक्तस्य लक्षणमाह क्षणेति। क्षणोऽल्पीयान् कालस्तस्य योऽसौ प्रतियोगी एकक्षणविलक्षणः परिणामोऽपरान्तनिर्ग्राह्यः अनुभूतेषु क्षणेषु पश्चात् सङ्कलनाबुद्ध्यैव यो गृह्यते स क्षणानां क्रम उच्यते। न ह्यननुभूतेषु क्षणेषु क्रमः परिज्ञातुं शक्यः॥ ३३॥

## योगसुधाकरः।

कोऽसौ क्रम इत्यपेक्षायामाह—क्षणेति।

क्षणप्रतियोगी क्रम इति स्वरूपनिर्देशः । क्षणौ प्रतियोगिनौ निरूपकौ यस्य स क्षणप्रतियोगी । एवं क्षणिकपरिणामक्रमो मन्तव्यः । तत्र प्रमाणं परिणामापरान्तनिर्ग्राह्य इति । मृदि पिण्डघटकपालचूर्णकणानां प्रत्यक्षपरिणामानां पूर्वान्तः पिण्डः अपरान्तः कण इति पूर्वोत्तरावधिग्रहणेन क्रमो निष्कृष्य ग्राह्यो भवतीत्यर्थः ॥ ३३ ॥

### भोजवृत्तिः ।

इदानीं फलभूतस्य कैवल्यस्यासाधारणं स्वरूपमाह—

**पुरुषार्थशून्यानां गुणानां(१) प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा(२)चितिशक्तेरिति(३) ॥ ३४ ॥**

समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमस्य परिणामस्य समाप्तौ विकारानुद्भवः, यदि वा चितिशक्तेः(४) वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेऽवस्थानं तत्कैवल्यमुच्यते। न केवलमस्मद्दर्शने क्षेत्रज्ञः कैवल्यावस्थायामेवंविधश्चिद्रूपो यावद्दर्शनान्तरेष्वपि विमृष्यमाण एवंरूपोऽवतिष्ठते। तथाहि—संसारदशायामात्मा कर्तृत्वभोक्तृत्वानुसन्धातृत्वमयः प्रतीयतेऽन्यथा यद्ययमेकः क्षेत्रज्ञस्तथाविधो न स्यात्तदा ज्ञानक्षणानामेव पूर्वापरानुसंधातृशून्यानामात्मभावे नियतः कर्मफलसम्बन्धो न स्यात्कृतहाना(५)कृताभ्यागमप्रसङ्गश्च । यदि येनैव शास्त्रोपदिष्टमनुष्ठितं कर्म तस्यैव भोक्तृत्वं भवेत्तदा हिताहितप्राप्तिपरिहाराय सर्वस्य प्रवृत्तिर्घटेत सर्वस्यैव व्यवहारस्य हानोपादानलक्षणस्यानुसन्धानेनैव व्याप्तत्वाज्ज्ञानक्षणानां परस्परभेदेनानुसन्धानशून्यत्वात्तदनुसन्धानाभावे कस्यचिदपि व्यवहारस्यानुपपत्तेः कर्ता भोक्ताऽनुसन्धाता यः स आत्मेति व्यवस्थाप्यते । मोक्षदशायां तु सकलग्राह्यग्राहकलक्षणव्यवहाराभावाच्चैतन्यमात्रमेव तस्यावशिष्यते । तच्चैतन्यं चितिमात्ररूपेणैवोपपद्यते न पुनरात्मसंवेदनेन; यस्माद्विषयग्रहणसमर्थत्वमेव(६) चिते रूपं नाऽऽत्मग्राहकत्वम् । तथाहि—अर्थाश्रित्या गृह्यमाणोऽयमिति गृह्यते स्वरूपं गृह्यमाणमहमिति न पुनर्युगपद्बहिर्मुखतान्तर्मुखतालक्षणव्यापारद्वयं परस्परविरुद्धं कर्तुं शक्यम्, अत एकस्मिन्समये व्यापारद्वयस्य कर्तुमशक्यत्वाच्चिद्रूपतैवावशिष्यते (७); अतो मोक्षावस्थायां निवृत्ताधिकारेषु गुणेषु चिन्मात्ररूप एवाऽऽत्माऽवतिष्ठत इत्येवं युक्तम् । संसारदशायां त्वेवंभूतस्यैव कर्तृत्वं भोक्तृत्वमनुसंधातृत्वं च सर्वमुपपद्यते । तथाहि—योऽयं प्रकृत्या सहानादिर्नैसर्गिकोऽस्य भोग्यभोक्तृत्वलक्षणः संबन्धोऽविवेकख्यातिमूलस्तस्मिन्सति पुरुषार्थकर्तव्यतारूपशक्तिद्वयसद्भावे या महदादिभावेन परिणतिस्तस्यां संयोगे सति यदात्मनोऽधिष्ठातृत्वं चिच्छायासमर्पणसामर्थ्यं बुद्धिसत्त्वस्य च संक्रान्तचिच्छायाग्रहणसामर्थ्यं चिदवष्टम्भायाश्च बुद्धेर्योऽयं कर्तृत्वभोक्तृत्वाध्यवसायस्तत एव सर्वस्यानुसंधानपूर्वकस्य व्यवहारस्य निष्पत्तेः किमन्यैः फल्गुभिः कल्पनाजल्पैः (८)। यदि पुनरेवंभूतमार्गव्यतिरेकेण पारमार्थिकमात्मनः कर्तृत्वाद्यङ्गीक्रियेत तदाऽस्य परिणामित्वप्रसङ्गः । परिणामित्वाच्चानित्यत्वे तस्याऽऽत्मत्वमेव न स्यात्, न ह्येकस्मिन्नेव समये एकेनैव रूपेण परस्परविरुद्धावस्थानुभवः संभवति । तथा हि—यस्यामवस्थायामात्मसमवेते सुखे समुत्पन्ने तस्यानुभवितृत्वं

---

(१) गुणानामिति नास्ति प्रथमद्वितीयपुस्तकयोः । (२) चितिशक्तिरिति पाठान्तरम् ।

(३) इतिशब्दः शास्त्रसमाप्तौ । कृतकर्तव्यतया पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः स्वकारणे अत्यन्तविलयः तेषां कार्यकारणात्मकानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते मनोऽस्मितायामस्मिता लिङ्गे लिङ्गमलिङ्गे इति योऽयं प्रतिसर्गः तत् कैवल्यम् । या तु चितिशक्तिः स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपापाये स्फटिकस्य स्वरूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यम् ।

(४) क्षणेषु यदि वा चिच्छक्तेरिति पाठान्तरम् ।

(५) कृतनाशेति पाठान्तरम् । (६) समर्थनमेवेति पाठान्तरम् ।

(७) चिद्रूपतयैवेति पाठान्तरम् । (८) कल्पनाजातैः, कल्पनाजालैरिति च पाठान्तरम् ।

न तस्यामेवावस्थायां दुःखानुभवितृत्वम्, अतोऽवस्थानां नानात्वात्(१) तदभिन्नस्यावस्थावतोऽपि नानात्वं नानात्वेन च परिणामित्वान्नाऽऽत्मत्वम् । नापि नित्यत्वम्, अत एव शान्तब्रह्मवादिभिः सांख्यैरात्मनः सदैव संसारदशायां मोक्षदशायां चैकरूपत्वमङ्गीक्रियते ।

ये तु वेदान्तवादिनश्चिदानन्दमयत्वमात्मनो मोक्षे मन्यन्ते तेषां युक्तः पक्षः : तथाहि—आनन्दस्य सुखरूपत्वात्सुखस्य च सदैव संवेद्यमानतयैव प्रतिभासात्संवेद्यमानत्वं च संवेदनव्यतिरेकेणानुपपन्नमिति संवेद्यसंवेदनयोरभ्युपगमादद्वैतहानिः । अथ सुखात्मकत्वमेव तस्योच्येत, तद्विरुद्धधर्माध्यासादनुपपन्नम्, न हि संवेदनं संवेद्यं चैकं भवितुमर्हति । किञ्चाद्वैतवादिभिः कर्मात्मपरमात्मभेदेनाऽऽत्मा द्विविधः स्वीकृतः, इत्थं च तत्र (२) येनैव रूपेण सुखदुःखभोक्तृत्वं कर्मात्मनस्तेनैव रूपेण यदि परमात्मनः स्यात्तदा कर्मात्मवत्परमात्मनः परिणामित्वमविद्यास्वभावत्वं च स्यात् । अथ न तस्य साक्षाद्भोक्तृत्वं किंतु तदुपढौकितमुदासीनतयाऽधिष्ठातृत्वेन स्वीकरोति, तदाऽस्मद्दर्शनानुप्रवेशः, आनन्दरूपता च पूर्वमेव निराकृता । किं चाविद्यास्वभावत्वे निःस्वभावत्वात्कर्मात्मनः कः शास्त्राधिकारी ? न तावन्नित्यनिर्मुक्तत्वात्परमात्मा, नापि अविद्यास्वभावत्वात्कर्मात्मा, ततश्च सकलशास्त्रवैयर्थ्यप्रसङ्गः । अविद्यामयत्वे च जगतोऽङ्गीक्रियमाणे कस्याविद्येति विचार्यते, न तावत्परमात्मनो नित्यमुक्तत्वाद्विद्यारूपत्वाच्च, कर्मात्मनोऽपि परमार्थतो निःस्वभावतया (३) शशविषाणप्रख्यत्वे कथमविद्यासंबन्धः ? अथोच्यते—एतदेवाविद्याया अविद्यात्वं यदविचाररमणीयत्वं नाम, यैव हि विचारेण दिनकरस्पृष्टनीहारवद्विलयमुपयाति साऽविद्येत्युच्यते । मैवम् (४), यद्वस्तु किंचित्कार्यं करोति तदवश्यं कुतश्चिद्भिन्नमभिन्नं वा वक्तव्यम्, अविद्यायाश्च संसारलक्षणकार्यकर्तृत्वम् (५) अवश्यमङ्गीकर्तव्यम्, तस्मिन्सत्यपि यद्यनिर्वाच्यत्वमुच्यते तदा कस्यचिदपि वाच्यत्वं न स्यात्, ब्रह्मणोऽप्यवाच्यत्वप्रसक्तिः; तस्मादधिष्ठातृतारूपव्यतिरेकेण नान्यदात्मनो रूपमुपपद्यते । अधिष्ठातृत्वं च चिद्रूपमेव तद्व्यतिरिक्तस्य धर्मस्य कस्यचित्प्रमाणानुपपत्तेः (६) ।

यैरपि नैयायिकादिभिरात्मा चेतनायोगाच्चेतन इत्युच्यते; (७), चेतनाऽपि तस्य मनःसंयोगजा । तथा हि—इच्छाज्ञानप्रयत्नादयो गुणास्तस्य व्यवहारदशायामात्ममनःसंयोगादुत्पद्यन्ते, तैरेव च गुणैः स्वयं ज्ञाता कर्ता भोक्तेति व्यपदिश्यते, मोक्षदशायां तु मिथ्याज्ञाननिवृत्तौ तन्मूलानां दोषाणामपि निवृत्तेस्तेषां बुद्ध्यादीनां विशेषगुणानामत्यन्तोच्छित्तेः स्वरूपमात्रप्रतिष्ठत्वमात्मनोऽङ्गीकृतम्, तेषामयुक्तः पक्षः, यतस्तस्यां दशायां नित्यत्वव्यापकत्वादयो गुणा आकाशादीनामपि सन्ति, अतस्तद्वैलक्षण्येनाऽऽत्मनश्चिद्रूपत्वमवश्यमङ्गीकार्यम् । आत्मत्वलक्षणजातियोग इति चेत् । न । सर्वस्यैव हि तज्जातियोगः संभवति, अतो जातिभ्यो वैलक्षण्यमात्मनोऽवश्यमङ्गीकर्तव्यम्, तच्चाधिष्ठातृत्वं, तच्च चिद्रूपतयैव(८) घटते नान्यथा ।

यैरपि मीमांसकैः कर्मकर्तृरूप आत्माऽङ्गीक्रियते तेषामपि न युक्तः पक्षः । तथा हि- अहंप्रत्ययग्राह्य आत्मेति तेषां प्रतिज्ञा अहंप्रत्यये च कर्तृत्वं कर्मत्वं चात्मन एव, न चैतद्विरुद्धत्वादुपपद्यते, कर्तृत्वं प्रमातृत्वं कर्मत्वं च च प्रमेयत्वम्, न चैतद्विरुद्धधर्माध्यासो युगपदेकस्य घटते (९) । यद्विरुद्धधर्माध्यस्तं न तदेकं, यथा भावाभावौ, विरुद्धे च कर्तृत्वकर्मत्वे । अथोच्यते—न कर्तृत्वकर्मत्वयोर्विरोधः किंतु कर्तृत्वकरणत्वयोः इति । केनैतदुक्तं विरुद्धधर्माध्यासस्य तुल्यत्वात्कर्तृत्वकरणत्वयोरेव

(१) अवस्थानानात्वात्, अवस्थायां नानात्वादिति च पा० ।
(२) द्विविध इष्यते । तत्रेति पाठान्तरम् । (३) त्मनोऽपि निःस्वभावतयेति पाठान्तरम् ।
(४) नैवमिति पाठान्तरम् । (५) लक्षणप्रपञ्चकार्यकर्तृत्वमिति पाठान्तरम् ।
(६) धर्माधर्मविज्ञानानुपपत्तेरिति पाठान्तरम् । (७) चेतनयाऽन्वित इष्यते इति पाठान्तरम् ।
(८) तस्याधिष्ठातृत्वं चिद्रूपतयैवेति पाठान्तरम् । (९) ध्यासादेकस्य घटत इति पाठान्तरम् ।

विरोधो न कर्तृत्वकर्मत्वयोः इति; तस्माद्दहंप्रत्ययग्राह्यत्वं परिहृत्याऽऽत्मनोऽधिष्ठातृत्वमेवोपपन्नम्, तच्च चेतनत्वमेव ।

यैरपि द्रव्यबोधपर्यायभेदेनाऽऽत्मनोऽव्यापकस्य शरीरपरिमाणस्य परिणामित्वमिष्यते तेषामुत्थानपराहत एव पक्षः । परिणामित्वे चिद्रूपताहानिश्चिद्रूपताभावे (१) किमात्मन आत्मत्वम्; तस्मादात्मन आत्मत्वमिच्छता चिद्रूपत्वमेवाङ्गीकर्तव्यम्, तच्चाधिष्ठातृत्वमेव ।

केचित्कर्तृरूपमेवाऽऽत्मानमिच्छन्ति । तथा हि—विषयसांनिध्ये या ज्ञानलक्षणा क्रिया समुत्पन्ना तस्या विषयसंवित्तिः फलं, तस्यां च फलरूपायां संवित्तौ स्वरूपं प्रकाशरूपतया प्रतिभासते, विषयश्च ग्राह्यतया, आत्मा च ग्राहकतया, घटमहं जानामीत्याकारेण (२) तस्याः समुत्पत्तेः, क्रियायाश्च कारणं कर्तैव भवतीत्यतः कर्तृत्वं भोक्तृत्वं चाऽऽत्मनो रूपमिति । तदनुपपन्नम्, यस्मात्तासां संवित्तीनां स किं कर्तृत्वं युगपत्प्रतिपद्यते क्रमेण वा ? युगपत्कर्तृत्वे क्षणान्तरे तस्य कर्तृत्वं न स्यात् । अथ क्रमेण कर्तृत्वं तदेकरूपस्य न घटते, एकेन रूपेण चेत्तस्य कर्तृत्वं तदेकस्य रूपस्य सदैव संनिहितत्वात्सर्वं फलमेकरूपं स्यात् । अथ नानारूपतया तस्य कर्तृत्वं तदा परिणामित्वं, परिणामित्वाच्च न चिद्रूपत्वम्, अतश्चिद्रूपत्वमेवाऽऽत्मन इच्छद्भिर्न साक्षात्कर्तृत्वमङ्गीकर्तव्यम् । यादृशमस्माभिः कर्तृत्वमात्मनः प्रतिपादितं कूटस्थस्य नित्यस्य चिद्रूपस्य तदेवोपपन्नम् ।

एतेन स्वप्रकाशस्याऽऽत्मनो विषयसंवित्तिद्वारेण ग्राहकत्वमभिव्यज्यत इति ये वदन्ति तेऽपि अनेनैव निराकृताः (३) ।

केचिद्विमर्शात्मिकत्वेनाऽऽत्मनश्चिन्मयत्वमिच्छन्ति, तेह्याहुर्न(४) विमर्शव्यतिरेकेण चिद्रूपत्वमात्मनो निरूपयितुं शक्यम्, जडाद्वैलक्षण्यमेव(५) चिद्रूपत्वमुच्यते, तच्च विमर्शव्यतिरेकेण निरूप्यमाणं नान्यथाऽवतिष्ठते । तदनुपपन्नम्, इदमित्थमेवंरूपमिति यो विचारः स विमर्श इत्युच्यते; स चास्मिताव्यतिरेकेण नोत्थानमेव लभते । तथाहि—आत्मन्युपजायमानो विमर्शोऽहमेवंभूत इत्यनेनाऽऽकारेण संवेद्यते; ततश्चाहंशब्दसंभिन्नस्याऽऽत्मलक्षणस्यार्थस्य तत्र स्फुरणान्न विकल्परूपतातिक्रमः, विकल्पश्चाध्यवसायात्मा बुद्धिधर्मो न चिद्धर्मः । कूटस्थनित्यत्वेन चितेः सदैकरूपत्वान्नाहंकारानुप्रवेशः, तदनेन सविमर्शत्वमात्मनः प्रतिपादयता बुद्धिरेवाऽऽत्मत्वेन भ्रान्त्या प्रतिपादिता न प्रकाशात्मनः परस्य पुरुषस्य स्वरूपमवगतमिति ।

इत्थं सर्वेष्वपि दर्शनेष्वधिष्ठातृत्वं विहाय नान्यदात्मनो रूपमुपपद्यते । अधिष्ठातृत्वं च चिद्रूपत्वम्, तच्च जडाद्वैलक्षण्यमेव, चिद्रूपतया यदधितिष्ठति तदेव भोग्यतां नयति, यच्च चेतनाधिष्ठितं तदेव सकलव्यापारयोग्यं भवति ; एवं च सति कृतकृत्यत्वात्(६) प्रधानस्य व्यापारनिवृत्तौ यदात्मनः कैवल्यमस्माभिरुक्तं तद्विहाय दर्शनान्तराणामपि नान्या गतिः; तस्मादिदमेव युक्तमुक्तं वृत्तिसारूप्यपरिहारेण स्वरूपे प्रतिष्ठा चितिशक्तेः कैवल्यम् ।

तदेवं सिद्धान्तरेभ्यो विलक्षणां सर्वसिद्धिमूलभूतां समाधिसिद्धिमभिधाय जात्यन्तरपरिणामलक्षणस्य च सिद्धिविशेषस्य प्रकृत्यापूरणमेव कारणमित्युपपाद्य धर्मादीनां प्रतिबन्धकनिवृत्तिमात्र एव सामर्थ्यमिति प्रदर्श्य निर्माणचित्तानामस्मितामात्रादुद्भव इत्युक्त्वा तेषां च योगिचित्तमेवाधिष्ठापकमिति प्रदर्श्य योगिचित्तस्य चित्तान्तरवैलक्षण्यमभिधाय तत्कर्मणामलौकिकत्वं चोपपाद्य विपाकानुगुणानां च वासनानामभिव्यक्तिसामर्थ्यं कार्यकारणयोश्चैक्यप्रतिपादनेन व्यवहितानामपि वासनानामानन्तर्यमुपपा-

---

(१) हानिश्चिद्रूपत्वाभावे इति पाठान्तरम् । (२) मीत्यनेन प्रकारेणेति पाठान्तरम् ।

(३) तेऽपि निराकृता इति पाठान्तरम् ।

(४) तथाहि नेति पाठान्तरम् । (५) जडात्किल वैलक्षण्यमेवेति पाठान्तरम् ।

(६) सति नित्यत्वादिति पाठान्तरम् ।

च तासामानन्त्येऽपि हेतुफलादिद्वारेण हानमुपदर्श्यातीतादिष्वध्वसु धर्माणां सद्भावमुपपाद्य विज्ञानवादं निराकृत्य साकारवादं च प्रतिष्ठाप्य पुरुषस्य ज्ञातृत्वमुक्त्वा चित्तद्वारेण सकलव्यवहारनिष्पत्तिमुपपाद्य पुरुषसत्त्वे(१) प्रमाणमुपदर्श्य कैवल्यानिर्णयाय(२) दशभिः सूत्रैः क्रमेणोपयोगिनोऽर्थानभिधाय शास्त्रान्तरेऽप्येतदेव कैवल्यमित्युपपाद्य । कैवल्यस्वरूपं निर्णीतमिति व्याकृतः कैवल्यपादः ॥ ३४ ॥

सर्वे यस्य वशाः प्रतापवसतेः पादान्तसेवानतिप्रभ्रश्यन्मुकुटेषु मूर्धसु दधत्याज्ञां धरित्रीभृतः ।
यद्वक्त्राम्बुजमाप्य गर्वमसमं वाग्देवताऽपि श्रिता(३) स श्रीभोजपतिः फणाधिपतिकृत्सूत्रेषु वृत्तिं व्यधात् ॥ २ ॥

इति श्रीधारेश्वरभोजदेवविरचितायां राजमार्तण्डाभिधानायां पातञ्जलयोगसूत्रवृत्तौ कैवल्याख्यश्चतुर्थः पादः ॥ ४ ॥

समाप्तश्चायं ग्रन्थः ।

---

कैवल्यस्वरूपमाह—पुरुषार्थेति ।

कृतकर्तव्यतया पुरुषार्थशून्यानां गुणानां पुरुषोपकरणानां लिङ्गशरीरात्मकानां यः प्रतिप्रसवः स्वकारणेऽत्यन्तविलयः स प्रकृतेः कैवल्यम् । या तु धर्मभेदाच्चितिशक्तिस्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यत्वरूपा जपापाये स्फटिकस्वरूपप्रतिष्ठावत्, सा पुरुषस्य कैवल्यमित्यर्थः । परस्परवियोगे हि प्रकृतिपुरुषयोरपि केवलता एकाकिता भवति । इतिशब्दः शास्त्रसमाप्तौ ॥ ३४ ॥

वृत्तिदीपोऽयमुद्भास्यवृत्त्यन्तरतमोपहः ।
यथार्थयोगसूत्रार्थदृष्टयेऽस्तु सदा सताम् ॥

इति श्रीमत्परमहंसपरिव्राजकविज्ञानाचार्यशिष्याग्र्यभावागणेशभट्टकृतायां पातञ्जलवृत्तौ कैवल्यपादश्चतुर्थः समाप्तः ।

---

कैवल्यस्वरूपमाह—पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति । अत्र गुणशब्देन बुद्धिरूपतया परिणताः सत्त्वादय उक्ताः । कैवल्यमेकाकिता । सत्वान्योन्यमविभक्तानामन्योन्यवियोगरूपतया गुणपुरुषयोरेव भवति । तत्र विवेकख्यात्या परवैराग्येण पुरुषार्थशून्यानां गुणानां पुरुषोपकरणवासनासहितानामात्यन्तिकः प्रतिप्रसवः प्रधाने लयस्तस्मात्पुरुषादत्यन्तवियोगस्तदेतद्यत्किञ्चित्पुरुषं प्रति प्रधानस्य कैवल्यम् । पुरुषस्य तु स्वरूपप्रतिष्ठा, सदा प्रतिबिम्बरूपेणोपाधिना वियुक्ता चितिशक्तिरूपा तत्कैवल्यमित्यर्थः । वाशब्दो व्यवस्थितविकल्पे । एवं हि पुरुषस्यात्यन्तिकदुःखभोगनिवृत्तिरूपपरमपुरुषार्थपर्यवसानं भवति । ये तु 'परमात्मनि जीवात्मलयो मोक्ष' इति वदन्ति, तन्मतेऽपि समुद्रे नदीनामिव ब्रह्मणि जीवानामुपाधिलयेनाविभाग एव लयशब्दार्थ इति न विरोधः । येऽप्यात्मनि अशेषविशेषगुणोच्छेदो मोक्ष इति वदन्ति वैशेषिकाः, तदपि नास्माकं विरुद्धम्, उपाधिविशेषगुणानामेवोपाधिमत्युपचारेण तदुच्छेदस्याप्युपचारात् । आत्यन्तिकी दुःखनिवृत्तिर्मोक्ष इति नैयायिकाः । तत्र भोग्यभोक्तृभावसम्बन्धेन दुःखनिवृत्तिः पुरुषार्थो न समवायेनेत्यतावान्विशेषः । वस्तुतो वैशेषिकमतवदेव तेनाविरोधः । यदपि नित्यानन्दावाप्तिर्मोक्ष इति, तदपि निर्दुःखतारूपानन्दावाप्तिपरत्वे न किंचिद्विरुद्धम् । 'विद्वान्हर्षशोकौ जहाती'त्यादि तु वैषयिकहर्षपरम् । यत्तु वास्तवमात्मनः कर्तृत्वं भोक्तृत्वमनुसन्धातृत्वं मन्यन्ते तेषां तद्रूपेण परिणामित्वापत्त्याऽनित्यत्व-

---

(१) पुरुषसिद्धाविति पाठान्तरम् । (२) निर्वाणायेति पाठान्तरम् ।
(३) वाग्देवता संश्रिता इति पाठान्तरम् ।

प्रसङ्गः । यदवस्थस्य सुखानुभवितृत्वं न तदवस्थस्य दुःखानुभवितृत्वम् । अवस्थाभेदाङ्गीकारे चावस्थावतोऽपि नानात्वापत्त्या नानात्वैकत्वभङ्ग । तस्माद्बुद्धियोगे यदात्मनोऽधिष्ठातृत्वं चिच्छायाग्रहणसामर्थ्यं बुद्धिसत्त्वस्य तद्ग्रहणसामर्थ्यं तेन बुद्धेर्यः कर्तृत्वाध्यवसायस्तेनैवाऽत्मनोऽपि तथाभासो न वास्तवं कर्तृत्वादीत्यास्थेयम् । मोक्षदशायां तु ग्राहकलक्षणव्यवहाराभावात्स्वरूपेणैवावतिष्ठते नात्मग्राहकत्वेन । स्वरूपे ह्यहमिति गृह्येत । नतु तदा तथा ग्रहीतु शक्यम् , अहंताया अभावात् । निर्विकल्पकं तु स्वरूपप्रतिष्ठापर्यवसाय्येवेति दिक् । ननु ज्ञानस्वरूप एव तवात्मज्ञानं स्वसंवेद्यमेवेति नियमभङ्ग इति चेन्न । वृत्तिरूपज्ञानविषय एवैतादृशनियमात् । यदपि नैयायिकाः जडे आत्मनि मनःसंयोगादिना ज्ञानोत्पत्तिमङ्गीकुर्वन्ति तेषां विरोधसमाधौ इतरव्यावृत्तं किमात्मत्वम् । नित्यत्वव्यापकत्वजातिमत्त्वानामाकाशमनआदिवृत्तित्वेन तद्व्यावर्तकत्वाभावात् । तस्मात्तदा जडेभ्यो व्यावृत्तये चिद्रूपताऽवश्यं स्वीकार्या । येऽप्यहंप्रत्यये आत्मनः कर्तृत्वं कर्मत्वं च वदन्ति, तेऽपि कर्तृत्वकरणत्वयोरिव कर्मकर्तृत्वयोरपि विरोधेन निरस्ताः । तस्माच्चेतनोऽधिष्ठातेत्येव युक्तम् । केचित्तु कर्तृत्वमेवात्मनः, तथाहि विषयसान्निध्ये या ज्ञानलक्षणा क्रिया समुत्पन्ना तस्या विषयसंवित्तिः फलं, तस्यां च फलरूपायां संवित्तौ ज्ञानं क्रियास्वरूपं प्रकाशरूपतया प्रतिभासते । विषयश्च ग्राह्यतया आत्माग्राहकत्वेन घटमहं जानामीत्येवंप्रकारेण तस्याः समुत्पत्तेः । अतः कर्तृत्वं भोक्तृत्वं चात्मनो रूपमिति वदन्ति । तेऽपि नैयायिकवदेव निरसनीया इति शिवम् ॥ ३४ ॥

इति श्रीपातञ्जलयोगसूत्रवृत्तौ नागोजीभट्टीयायां

कैवल्यपादश्चतुर्थः ।

विचार्य बहुतन्त्राणि योगसूत्रेषु या कृता ।

वृत्तिस्तया प्रीयतां मे भगवान्स फणीश्वरः ॥

## समाप्तं पातञ्जलयोगदर्शनम् ।

---

### मणिप्रभा ।

अधुना शास्त्रप्रतिपाद्ययोगफलं कैवल्यं दर्शयति—पुरुषार्थेति ।

कृतभोगापवर्गाणां कृतकृत्यानां बुद्ध्यादि गुणानां प्रातिलोम्येन प्रसवः व्युत्थानसमाधिपरवैराग्यसंस्कारा मनसि लीयन्ते, मनश्चास्मितायां लीयते, सा महति, महत्तत्त्वं गुणेष्विति प्रलयः । तत्प्रधानस्य कैवल्यं पुरुषविशेष उपचर्यते । यद्वा चितिशक्तिश्चित्स्वभावा पुरुषव्यक्तिः स्वरूपमात्रेण प्रकर्षेण तिष्ठतीति स्वरूपप्रतिष्ठा पुनर्बुद्ध्याद्यनर्थेनात्यन्तिकवियोग इति यावत् । तदिदं पुरुषस्य नित्यस्य नित्यशुद्धासङ्गस्य प्रकाशस्य कैवल्यमिति रमणीयम् । सौत्र इतिशब्दः शास्त्रपरिसमाप्तिदर्शनार्थः ॥ ३४ ॥

यद्वागप्रणवप्रपत्तिदहनः सद्योऽन्तरायाटवीं दग्ध्वा स्वात्मनि बोधदीपमचले सूते तमःपाटनम् ॥

यत्र न्यस्तसमस्तकर्म जनयेद्योगं तदङ्गं विना वन्दे सिद्धिभुवं तमीशमनिशं कैवल्यदं राघवम् ॥ १ ॥

यत्प्रसादलवः सूते मोक्षाद्याः सर्वसम्पदः ।

उमाधवं महेशानं तं काशीनिलयं भजे ॥ २ ॥

फणीन्द्रसूत्रसम्बद्धा व्याख्याङ्मणिभूषिता ।

मद्वाङ्मौक्तिकमाला स्यात् सदा श्रीरामपादयोः ॥ ३ ॥

क्वाहं प्रमादनिरतः क्व वात्सल्यं गुरोरिदम् ।
नूनं महात्मनां दीने स्वतश्चित्तं कृपाऽन्वितम् ॥ ४ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पूज्यपादशिष्य-श्रीरामानन्दसरस्वतीकृतौ सांख्यप्रवचने योगमणिप्रभायां कैवल्यपादश्चतुर्थः समाप्तः ॥**



## चन्द्रिका ।

इदानीं फलभूतस्य कैवल्यस्यासाधारणं स्वरूपमाह **पुरुषार्थेति** । समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमपरिणामस्य समाप्तौ विकारानुद्भवो यदि वा चितिशक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेणावस्थानं तत् कैवल्यमुच्यते । न केवलमस्मद्दर्शने क्षेत्रज्ञः कैवल्यावस्थायामेवंभूतो दर्शनान्तरेष्वपि विमृश्यमाण एवंरूप एवावतिष्ठते यस्माच्छास्त्रान्तरेऽप्येवमेव निश्चयस्तस्मादिदमेव युक्तं वृत्तिसारूप्यपरिहारेण स्वरूपप्रतिष्ठा चितिशक्तेः कैवल्यमिति । तदेवं सिद्ध्यन्तरेभ्यो विलक्षणा सर्वसिद्धिमूलभूता समाधिसिद्धिः सैव साधनीयेति ॥ ३४ ॥

सूत्रार्थवृत्तिमालोच्य कृतेयं पदचन्द्रिका ।
अनन्तेनेश्वरप्रीत्यै चार्पिता शिवपादयोः ॥

**इति योगचन्द्रिकायां चतुर्थः कैवल्यपादः ॥ ४ ॥**

**कल्याणमस्तु ॥**

---

गुणानां परिणामक्रमसमाप्तौ किं फलिष्यतीत्यत्राह—**पुरुषार्थेति** ।

कृतभोगापवर्गाणां कार्यकारणात्मनां गुणानां प्रधाने प्रतिप्रसवः प्रलयः कैवल्यम्, चितिशक्तिः कूटस्थनित्या शुद्धासङ्गचित्स्वभावा शक्तिः स्वरूपप्रतिष्ठा पुनर्बुद्ध्यादिसम्बन्धविधुरा वा कैवल्यं भवतीत्यतिशोभनम् । इतिशब्दः शास्त्रपरिसमाप्तिद्योतनार्थः ॥ ६४ ॥

यत्कृपापोतमासाद्य समुत्तीर्णो भवार्णवात् ।
नमोऽस्तु तस्मै गुरवे स्वाविद्याध्वान्तभानवे ॥ १ ॥
क्वाहं क्व योगसरणिर्गहनार्था तथाप्यहम् ।
श्रीगुरोः कृपयाकार्षं वृत्तिं योगसुधाकरम् ॥ २ ॥
फणीन्द्रसूत्रग्रथिता मद्वाङ्मौक्तिकमालिका ।
समर्प्यते मया श्रीमद्गुरोश्चरणपङ्कजे ॥ ३ ॥

**इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां श्रीमत्पातञ्जलिप्रणीते योगशास्त्रे सांख्यप्रवचनापरनामधेये योगसुधाकराभिधायां वृत्तौ**

**कैवल्यपादः समाप्तः ॥**

**समाप्तश्चेदं योगशास्त्रम् ॥**

* श्रीः *

# वर्णानुक्रमसूत्रसूची ।

## सूत्रानुक्रमणिका ।

इति ।

## चिकित्सोपयुक्त नवीन ग्रन्थ—

**काकचण्डीश्वरकल्पतन्त्रम्।** कैलाशपति पाण्डेय कृत विद्योतिनी हिन्दी टीका युक्त। पं० बटुकनाथ शर्मा कृत भूमिका सहित १२–००

**रसाध्यायः।** संस्कृत टीका सहित। सं० पं० रामकृष्ण शर्मा तथा इन्द्रदेव त्रिपाठी कृत हिन्दी व्याख्या युक्त १२–००

**भावप्रकाशः।** श्री भावमिश्र कृत। पं० ब्रह्मशंकर मिश्र कृत 'विद्योतिनी' हिन्दी टीका, भूमिका, अनुक्रमणिका आदि सहित। ज्वराधिकार १५–०० १–२ भाग संपूर्ण २००–००

**अष्टाङ्गहृदयम्।** वाग्भट कृत। अत्रिदेव गुप्त कृत 'विद्योतिनी' हिन्दी टीका सहित। वैद्य यदुनन्दन उपाध्याय कृत नोट्स आदियुक्त।
सूत्रस्थान १५–०० संपूर्ण ५५–००

**भैषज्यरत्नावली।** श्री गोविन्ददास कृत। अम्बिकादत्त शास्त्री कृत 'विद्योतिनी' हिन्दी टीका विशद नोट्स आदि सहित। सं० पं० राजेश्वर दत्त शास्त्री आयुर्वेद बृहस्पति १२५–००

**काश्यपसंहिता ( वृद्धजीवकीय तन्त्रं )।** वृद्धजीवक कृत तथा वात्स्य द्वारा संशोधित। नेपाल राजगुरु पं० हेमराज शर्मा कृत संस्कृत-हिन्दी बृहद् उपोद्घात सहित। श्री सत्यपाल कृत 'विद्योतिनी' हिन्दी टीका सहित १२५–००

**अष्टांगसंग्रहः** वाग्भट कृत। गोवर्धन शर्मा छांगाणी कृत 'अर्थप्रकाशिका' हिन्दी टीका, नोट्स आदि युक्त। सूत्रस्थान ४०–००
शरीरस्थान २०–०० शेषस्थान यन्त्रस्थ

**माधवनिदानम्।** श्री माधवकर कृत। श्री विजयरक्षित तथा श्री कण्ठदत्त कृत 'मधुकोश' संस्कृत टीका तथा ब्रह्मशंकर शास्त्री कृत 'मनोरमा' हिन्दी टीका सहित ४०–००

**योगरत्नाकरः।** लक्ष्मीपति शास्त्री कृत 'विद्योतिनी' हिन्दी टीका सहित। सं० ब्रह्मशंकर शास्त्री १७५–००

**वनौषधि चन्द्रोदय।** श्री चन्द्रराज भंडारी कृत। २ जिल्द में १ से १० भाग। पृथक्-पृथक् १५–०० सम्पूर्ण भाग १००–००

---

प्राप्तिस्थान—चौखम्भा संस्कृत संस्थान, पो० बा० १३९ वाराणसी–१